THE

# NALODAYA,

A

SANSCRIT HISTORICAL POEM

IN

FOUR BOOKS.

BY

KÁLIDÁSA.

EDITED BY

PANDITA JAGANNÁTHA SUKLA

OF FORT WILLIAM COLLEGE.

# नलोदयः।

चतुःसर्गसम्बलितं

सुबोधिनीटीकासहितं श्रीकालिदासकृतं

सत्काव्यं

श्रीपण्डितजगन्नाथ शुक्लेन परिशोधितम्।

CALCUTTA:

PUBLISHED BY BÁBU BHUVANA CHANDRA VASÁKA.

No. 8. NIMTOLLAH GHAT STREET.

## ॥ अनुक्रमणिका ॥







॥ परमेश्वरो जयति ॥

# नलोदयः ।

प्रथमः सर्गः ।

हृदय सदा यादवतः पापाटव्या दुरासदायादवतः ।
अरिसमुदायादवतस्त्रिजगन्मागाःस्मरेणदायादवतः॥

## सन्धिवर्जितः ।

हृदय सदा यादवतः पापाटव्याः दुरासदायाः दवतः ।
अरिसमुदायात् अवतः त्रिजगत् मा गाः स्मरेण दायादवतः ॥ १ ॥

## सटीकः ।

हृदयेति । हे हृदय अन्तःकरण यादवतः यादवात् पञ्चम्यास्तसिल् । त्वं मागाः मा गच्छेः । कथम्भूतात् ? पापाटव्याः पापारण्याद्द दुरासदायाः दुःखेन सोढुं शक्यायाः । दवतः दवाग्नेः । अरि-समुदायात् शत्रुसमूहात् त्रिजगत् त्रैलोक्यं सदा अवतः पालयतो रक्षतो वा । यद्वा । कीदृशात् यादवतः ? दुःसोढ़ा या पापाटवी तस्या दवाग्नेरिति रूपकम् । पुनः कीदृशात् ? अरिसमूहात् त्रैलोक्य मवत इति । पुनः कीदृशात् ? स्मरेण कामेन दायादवतः पुत्त्रवतः । दायादौ सुतबान्धवावित्यमरः ॥१॥

योजनिनागोपीतश्चचार योवल्लवाङ्गनागोपीतः ।
भूर्येनागोपीतः कंसाद्यो द्वेषमेव नागोपीतः ॥

यः अजनि ना गोपीतः चचार यः वल्लवाङ्गनागोपीतः ।
भूः येन अगोपि इतः कंसात् यः द्वेषं एव नागः अपि इतः ॥ २ ॥

य इति । यः ना पुरुषः गोपीतः यशोदातः । अगोपीतो देवकीतो वा अजनि जातः । यः वल्लवा आभीरास्तेषाम् अङ्गनास्तासां गोभि र्नेत्रैः पीतः सन् सादरम् अवलोकितः सन् चचार । दिङ्नेत्रदृष्टिभूजले लक्ष्यदृष्या स्त्रियां पुंसि गौरित्यमरः । येन भूरगोपि अरक्षि । यः कंसाद्व द्वेषमेव इतः प्राप्तः । येन नागोपि कालियः कुवलयापीड़ोपि वा इतः दूरीकृतः । यद्वा । इतोऽस्मात् कंसात् द्वेषमेव केवलं न अपितु आगोपि अपराधमपि इतः प्राप्तः ॥ २ ॥

यद्‌रिपु सन्नामानस्थितयोयन्नुन्नमुद्‌लसन्नामानः ।
यत्र ससन्नामानःस्युर्भवभाजश्च पठितसन्नामानः ॥

यद्‌रिपु सन्नाः मानस्थितयः यत् नुन्नं उद्‌लसत् नाम अनः ।
यत्र ससन्ना मा न स्युः भवभाजः च पठितसन्नामानः ॥ ३ ॥

यदरीति । यस्यारिषु मानस्थितयोऽभिमानाद्यस्थानमित्यर्थः । यद्वा मानश्चित्तसमुन्नतिः स्थितिर्मर्यादा मानश्च

स्थितयश्चेति द्वन्द्वः सन्ना अवसन्ना जाता इत्यर्थः। नाम संभावनायाम् अनः शकटं येन तुन्नं प्रेरितं सत् उदलमत् चचालेत्यर्थः। यत्र कृष्णे ससन्नामाः नमनं नामः संश्चासौ नामश्चेति सन्नामः सन्नामेन सह वर्त्तमानाः ससन्नामाः कृत-सम्यङ्नतयः सांसारिका न स्युः। कीदृशाः? पठित-सन्नामानः। सन्ति च तानि नामानि च पठितानि वारंवारं गृहीतानि सन्नामानि गोविन्दादीनि यैस्ते पठितसन्नामानः। यद्वा। यस्मिन् मा लक्ष्मीः ससन्ना सन्निकटा। समीपे निकटासन्नसन्निकृष्टसनीडवदित्यमरः। तेनादूरदेशान्तर-वर्त्तित्वविशिष्टा समीपस्थितेति यावत्। आसन्न इति। आङुपसर्गसहितः अयं निरुपसर्गः च पुनः पठितसन्ना-मानो भवभाजो न स्युः॥ ३॥

**समनिन्दानवनाशञ्जनतालिकुलंयथैवदानवनाशम्।**
**द्विरदाद्दानवनाशं जगच्चलभतेयतः सदानवनाशम्॥**

समनिन्दानवना शं जनता अलिकुलं यथा एव दानवनाशम्।
द्विरदात् दानवनाशं जगत् च लभते यतः सदा अनवनाशम्॥ ४॥

समेति। जनता जनसमूहः यतो रात्रः शं कल्याणं लभते प्राप्नोति च पुनः जगत् दानवानां दैत्यानां नाशं स्वत्युं यतो लभते। कीदृशी जनता? समनिन्दानवना। णुस्तुतौ धातोर्ल्युटि नवनं स्तुतिः। निन्दा च नवनं च निन्दा नवने समे निन्दानवने यस्याः सा? जगत् कीदृशं? सदा अन-वनाशम् अवनं रक्षणं तस्य आशा अवनाशा न विद्यते

अवनाशा यस्य तत् अनवनाशं यथा अलिकुलं कर्त्तुः हस्तिसकाशात् दानवनाशं प्राप्नोति दानवनं दानजलं तस्य आशनम् आशस्तं प्रातराशं सायमाशञ्च तद्वत् ॥ ४ ॥

कुलकम् ।

अस्तिसराजानीतेरामाख्यो यो गतीः पराजानीते ।
यस्यररराजानीते रत्नानि जनः कुले धराजानीते ॥

अस्ति सः राजा नीतेः रामाख्यः यः गतीः पराः जानीते ।
यस्य रराज अनीतेः रत्नानि जनः कुले धराजानि इते ॥ ५ ॥

अस्तीति । स रामाख्यो राजास्तीत्यन्वयः । रामोऽभिरामः सुन्दर इति यावत् आख्या नाम यस्य सः । यः नीते र्नयस्य परा उत्कृष्टा गतीः जानीते जानाति । अनीतेः ईतिरहिततया हेतौ पञ्चमी । यस्य कुले सति राज्यं कुर्वति सतीति शेषः । जनः रराज सुखीबभूव । यद्वा कीदृशस्य यस्य ? अनीतेः ईतिरहितस्य । ईतयोतिदृष्ट्यादयः । कीदृशे कुले ? धराजानि भूम्युत्पन्नानि रत्नानि इते प्राप्ते ॥ ५ ॥

यः सेनानावारिप्रकरनदीः शरमयं धुनानावारि ।
अतरन्नानावारि व्यसनै र्यद्भुविवनञ्च नानावारि ॥

यः सेनानावा अरिप्रकरनदीः शरमयं धुनानाः वारि ।
अतरत् ना न अवारि व्यसनैः यद्भुवि वनं च नानावारि ॥ ६ ॥

यद्दति । यः सेनानावा सैन्यनौकया अरिप्रकरनदीः

शत्रुसमूहनदीः अतरत् तीर्णवान् । कीदृशीर्नदीः ? शरमयं बाणमयं वारि धुनानाः कम्पयमानाः । यद्भुवि ना पुरुषः व्यसनैः न अवारि इति काकुः । अपितु वारित एव च पुनर्यस्य वनं नानावारि नानागजबन्धनयुक्तम् । वारी तु गजबन्धनीत्यमरः ॥ ६ ॥

अपि यो दायादायक्षयप्रदोंहसि सतां यदायादायः ।
करमादायादायश्रियोऽब्धिरधिराजमसिगदायादायः

अपि यः दायादाय क्षयप्रदः अंहसि सतां यदायाः दायः ।
करं आ दायादाय श्रियः अब्धिः अधिराजं असिगदायादाः यः ॥ ७ ॥

अपीति । यः अंहसि पापे जाते दायादाय पुत्रायापि क्षयप्रदः नाशकर्त्ता यदायाः यस्य आयाधनागमनानि सतां दायः न्यायप्राप्तो भागः । पुनश्च यः अधिराजं राजानमधिकृत्य करम् आदाय आदाय श्रियः अब्धिः कीदृशः ? असिगदायादाः असिश्च खड्गः गदा च असिगदे यादांसि जलजन्तवो यत्र स तथा ॥ ७ ॥

अविदूरराजादित्या कृताल्पभेदैवभूः सराजादित्या ।
येन सराजादित्यात्त्रिदिवात्संयुक्तशत्रुराजादित्या ॥

अविदूरराजा अदित्या कृताल्पभेदा एव भूः सराजादित्या ।
येन सराजादित्यात् त्रिदिवात् संयुक्तशत्रु राजा दित्या ॥ ८ ॥

अवीति । येन भूस्त्रिदिवात् स्वर्गादल्पभेदैव कृता । कीदृशी भूः ? अविदूरराजा अविदूरे निकटे अजो विष्णु-

हरौ यस्याः सा तया। कीदृशात् त्रिदिवात् ? अदित्या देवमाता विशिष्टात् विशेषणे तृतीया। पुनर्भूः कीदृशी ? सराजादित्या दितायच्छेदाय हिताः दित्याः न दित्याः अदित्याः साधव इति यावत्। राजसु चत्रियेषु अदित्याः राजादित्याः तेन सह वर्त्तमाना सा तया स चत्रिय-श्रेष्ठेत्यर्थः। अथवा राजादित्यनामा नलभ्राता तेन सह वर्त्तमाना। यद्वा। राज्ञां मध्ये आदित्यो राजा-दित्य स्तेन युक्तेत्यर्थः। पुनः कीदृशात् त्रिदिवात् ? सरा-जादित्यात्। राजा चन्द्रः राजा च आदित्यश्च राजादित्यौ ताभ्यां सह वर्त्तमानात्। येन कीदृशेनादित्या संयुक्तशत्रु-राजादितिर्दानमवखण्डनमिति यावत्। दोऽवखण्डने। तया संयुक्तः शत्रुराट् यस्य स तया तेन। सखण्डन-शत्रुणेत्यर्थः ॥८॥

खलसेनानानावेद्यः स्वांहोब्धौ भुविचयस्य नानावेद्यः।
स्निग्धजनानावेद्य प्रयतेस्य सुकाव्यविरचनानावेद्य ॥

खलसेनाः न अवेत् यः स्व होब्धौ भुवि च यस्य नानावेद्यः।
स्निग्धजनान् आवेद्य प्रयते अस्य सुकाव्यविरचनानावे अद्य ॥ ६ ॥

खलेति। स्निग्धजनान् आवेद्य निवेद्य स्वांहोब्धौ स्वकीयं यदंहः पापं तदेव अब्धिस्तत्र सुष्ठु यत् काव्यं तस्य रचना सैव नौ नौका तस्यै यस्य रामाख्यस्य अद्य इदानीं प्रयते यत्नं कुर्वे। यस्य कस्य यः खलसेनां दुष्टसैन्यं न अवेत् न रचेत्। पुनर्यस्य भुवि संसारे नानावेद्यः नानाप्रका-रिका यज्ञभूमिमण्डपप्रदेशाः सन्ति ॥ ६ ॥

अथ निजराज्यन्तेनप्राशासि नलेन शत्रुराज्यन्तेन ।
येनाराज्यन्तेनश्रिया दिशोयस्य विहतिराज्यन्तेन ॥

अथ निजराज्यं तेन प्राशासि नलेन शत्रुराज्यन्तेन ।
येन अराज्यन्त इनश्रिया दिशः यस्य विहतिः आज्यन्ते न ॥ १० ॥

अथेति । तेन नलेन निजराज्यं प्राशासि शासितम् । कीदृशेन? शत्रुराज्यन्तेन शत्रूणां राज्याः शत्रुश्रेण्या अन्तेन मृत्युना । येन दिशः अराज्यन्त अशोभन्त । कीदृशेन इनश्रिया इनवत् सूर्य्यवत् श्रीः शोभा यस्य स तथा तेन । यस्य च आज्यन्ते आजिर्युद्धं तस्य अन्ते मध्ये विहति र्न सर्व्वत्र जय एवेत्यर्थः ॥ १० ॥

मूर्त्तिं मारसमानां योदधदायुःसहस्रमारसमानाम् ।
रुद्रकुमारसमानामजयद्द्विषताम्पंक्तिमारसमानाम् ॥

मूर्त्तिं मारसमानाम् यः अदधत् आयुः सहस्रं आर समानाम् ।
रुद्रकुमारसमानाम् अजयत् द्विषतां पंक्तिं आरसमानाम् ॥ ११ ॥

मूर्त्तिमिति । यः समानां वर्षाणां सहस्रमायुः आर प्राप । ऋप्रापणे धातोः परीक्षायाम् आर । किं कुर्व्वन्? मारसमानां कामतुल्यां मूर्त्तिमाकारं दधत् धारयन् । यश्च द्विषतां शत्रूणां पंक्तिं श्रेणीमजयत् जितवान् । कीदृशीं? रुद्रकुमारसमानां रुद्रकुमारः कार्त्तिकेयः तद्वत् समानां मानेन सह वर्त्तमानां पुनः कीदृशीं? आरसमानां शब्दायमानाम् ॥ ११ ॥

साम्बनियामानयतः श्रेष्ठाविद्यास्तदाश्रयामानयतः ।
अधिकायामानयतः शत्रावपि यस्य धीर्दयामानयतः ॥

साम्बनियामाः न यतः श्रेष्ठाः विद्याः तदाश्रयाः आनयतः ।
अधिकाया मा नयतः शत्रौ अपि यस्य धीः दयां आनयतः ॥ १२ ॥

साम्बेति । तदाश्रयास्तस्य नलस्याश्रया ऋतुपर्णप्रभृतयः यतो नलात् श्रेष्ठा न भवन्तीत्यध्याहार्य्यम् । कीदृशात् ? नियमन्नियामः अम्बनियामेन सह वर्त्तमानाः विद्याः मानयतः जानतः । नियामो नियमो याम इत्यमरः । यस्य मा लक्ष्मीः नयतः नीतितः अधिकाय अधिक आयो यस्याः सा कीदृशस्य ? शत्रावपि दयाम् आनयतः कुर्व्वतो धीः जिघांसारहितेति शेषः ॥ १२ ॥

अहितानामायस्य त्राता यः शरणगामिनामायस्त्र ।
गतनानामायस्त्र स्रुतः पिता वीरसेननामा यस्त्र ॥

अहितानां आयस्य त्राता यः शरणगामिनां आयस्य ।
गतनानामायस्य स्रुतः पिता वीरसेननामा यस्य ॥ १३ ॥

अहितेति । यो नलः शरणगामिनां शरणागतानाम् आयस्योद्यमं कृत्वा त्राता रक्षिता । पुनः आयस्य धनागमस्य । यस्य च वीरसेननामा पिता स्रुतो विख्यातः । कीदृशस्य ? गता नानामायाः यस्मात्सौ तस्य । आयस्येति यसुप्रयत्ने धातोः क्त्वायां ल्यपि ॥ १३ ॥

भुव्यतनोदन्तेन द्विषतां सयशांसि शोभनोदन्तेन ।
नीतानोदन्तेनक्षितिमभजन्नहितदन्तिनोदन्तेन ॥

भुवि अतनोत् अन्तेन द्विषतां सः यशांसि शोभनोदन्तेन ।
नीताः दोदं तेन क्षितिं अभजन् अहितदन्तिनः दन्तेन ॥ १४ ॥

भुवीति । स नलः भुवि पृथिव्यां द्विषतां शत्रूणामन्तेन नाशेन यशांसि अतनोत् विस्तारयामास । पुनः नोदनं नोदः प्रेरणमिति यावत् । येन नोदं नीता अहितदन्तिनः शत्रुहस्तिनो दन्तेन क्षितिमभजन् हता इत्यर्थः । कीदृशेन ? शोभनोदन्तेन शोभन उदन्तो वार्त्ता यस्यासौ स तेन । वार्त्ता प्रवृत्तिर्वृत्तान्तउदन्तः स्यादित्यमरः । नुद प्रेरणे इति धातोर्नोदः ॥ १४ ॥

सचिवगिरागोपायन्नलःसपृथिवीं निरस्तरागोपायं ।
शत्रोरागोपायं नीत्वा नेमु र्महत्तरागोपायम् ॥

सचिवगिरा अगोपायत् नलः सः पृथिवीं निरस्तरागोपायम् ।
शत्रोः आगोपायं नीत्वा नेमुः महत्तराः गोपाः यम् ॥ १५ ॥

सचिवेति । स नलः निरस्तरागोपायं यथा स्यात् तथा सचिवगिरा मन्त्रिवाक्येन पृथिवीमगोपायत् अरक्षत् । रागस्योपायो रागोपायः व्यसनमिति यावत् निरस्तो रागपायो यस्यां क्रियायां तत् तादृशम् । महत्तरा गोपा आगोपायं नीत्वा यं नेमु र्नमस्चक्रुरित्यर्थः । गां पृथ्वीं पान्ति ते गोपा

राजानः । आगोप्रायम् आगसोऽपराधस्यापायो नाशस्तम् । गोपाः कीदृशाः ? यदोर्मध्ये महत्तराः श्रेष्ठाः आगोपाय-दिति गुपूरक्षणे धातोः । आगोपराधोमन्तुश्चेत्यमरः । दिङ् नेत्रदृष्टिभूजलइत्यादत्रमरः । नेमुरिति णमुप्रणतौ धातोर्लिटि बहुवचनम् ॥ १५ ॥

योऽदम्भीमान्यापादधिकोथरिपुर्यमेत्यभीमान्यायात् ।
वैदर्भीमान्यायात्रिजगतिकन्याबभूवभीमान्नायात् ॥

यः अदम्भी मानी आयात् अधिकः अथ रिपुः यं एत्य भीमान् यायात् ।
वैदर्भी मान्या या त्रिजगति कन्या बभूव भीमान्न्यायात् ॥ १६ ॥

योऽदम्भीति । भीमान्यायात् भीमभूपालात् वैदर्भी कन्या बभूव जाता । अननम् आनः आनीस्यास्तीत्यानी आनी जीवितवान् आयो यस्य निरन्तरं धनागमवानित्यर्थः । राजेति यावत् । भीमश्चासावान्यायश्चेति भीमान्यायस्तस्मात् । वैदर्भी कीदृशी ? या त्रिजगति मान्या पूज्या । स को भीमः । योऽदम्भी दम्भरहितः । पुनः कीदृशः ? आयात् धनवृद्धेर्हेतो र्मानी अभिमानी । अथ अधिको रिपुः शत्रु र्यमेत्य यन्निकटे आगत्य भीमान् भीतः सन् यायात् प्रपलाय्य गच्छेत् । भीति भीः साध्वसं भयमित्यमरः । भीमान्मतुप् । यायादिति या प्रापणे धातोः । यत्तु भीमान् न्यायादित्यत्र भीमादिति पञ्चमीं कल्पयित्वा न्यायात् । न्यायेन कन्या बभूवेति व्याचक्षते तत्र सन्धौ सति नकारद्वित्वं तेन यमकत्व-हानिरिति तच्चिन्त्यम् ॥ १६ ॥

**महिततमारम्भाभिर्दमयन्तीसदृगुमारमारम्भाभिः ।**
**दधती मारम्भाभि र्ववृधे सोरुद्वये समारम्भाभिः ॥**

महिततमारम्भाभिः दमयन्ती सदृक् उमारमारम्भाभिः ।
दधती मारं भाभिः ववृधे सा उरुद्वये समा रम्भाभिः ॥ १७ ॥

महितेति । दमयन्ती ववृधे वृद्धिं प्राप्ता युवतिर्बभूवेत्यर्थः । कीदृशी ? उमारमारम्भाभिः सदृक् सदृशी । उमा पार्व्वती रमा लक्ष्मीः रम्भाऽप्सरोभेदस्ताभि रुमारमारम्भाभिः । कीदृशीभिः ? महिततमारम्भाभिः । प्रकृष्टो-महितो महिततमः पूजिततम इति यावत् । महिततम आरम्भो यासां तासादृश्यस्ताभिः । पुनः कीदृशी ? भाभिः कान्तिभि ? मारं कन्दर्पं दधती धारयन्ती । पुनः कीदृशी ? उरुद्वये रम्भाभिः कदलीभिः समा ॥ १७ ॥

**सा रत्नं नारीणां नलः श्रियामजनिनिलयनंनारीणां ।**
**यस्यानन्नारीणां मरुभुवमापद्घटावनं नारीणाम् ॥**

सा रत्नं नारीणां नलः श्रियां अजनि निलयनं नारीणाम् ।
यस्य अनना अरीणां मरुभुवं आपत् घटा अवनं न आरीणाम् ॥ १८ ॥

सेति । सा दमयन्ती नारीणां मध्ये रत्नं श्रेष्ठमजनि जाता । नलश्च नारीणां मनुष्यसम्बन्धिनीनां श्रियां कान्तीनां निलयनं गृहमजनि । नरस्येयं नारी । यस्य चारीणां घटा मरुभुवमापत् प्राप अवनं नापदिति पूर्वेणैवान्वयः । मरुभुवं कथम्भूतां नारीणां शून्यां धिक्कृतां वा ।

श्रवीणां घटा कीदृशी ? अनन्ना न विद्यते अन्नं यस्याः सा अनन्ना अवरीणो धिक्कृतश्चेत्यमरः ॥ १८ ॥

चकमे सा राजन्यश्रेष्ठन्तन्तां सः तेजसा राजनयः।
आत्तविसाराजन्यश्रियोऽधितययाजिताःससाराजन्यः॥

चकमे सा राजन्यश्रेष्ठं तं तां सः तेजसा राजन् यः।
आत्तविसाराः जन्यश्रियः अधित यया जिताः ससाराः जन्यः ॥ १९ ॥

चकमे इति। सा दमयन्ती तं राजन्यश्रेष्ठं चत्त्रियोत्तमं चकमे कामितवती। स च नलस्तां चकमे इति पूर्व्वेणैवान्वयः। तेजसा राजन् दीप्तिं कुर्व्वन्। येन जन्यश्रियो युद्धलक्ष्म्यः अधित प्राप्ताः। कीदृशी ? आत्तविसाराः विसरणं विसारः विस्तार इति यावत् आत्तो गृहीतो विस्तारो याभिस्ताः। यया दमयन्त्या जन्यो बध्वो जिताः कीदृश्यः ? ससाराः सौन्दर्य्यसहिताः। सारः स्थिरांशे सौन्दर्य्ये इति धरणिः। युद्धमायोधनं जन्यम्। समाः स्नुषाजनीवध्व इति चामरः ॥ १९ ॥

नार्त्तिं नींद्यानेन प्रभाविहीनेन शोभनोद्यानेन।
अरजानोद्यानेनस्फुटमितिगतिमिहनलोतनोद्यानेन

न आर्त्तिः नोद्या न इनप्रभाविहीनेन शोभनोद्यानेन।
अरजा नः अद्य अनेन स्फुटं इति गतिं इह नलः अतनोत् यानेन ॥२०॥

नार्त्तीति। नलः इति हेतोरिह वने स्फुटं यथा स्यादेवं

यानेनाखेन गतिं गमनं अतनोदकरोत्। इति किं? अनेन शोभनोद्यानेन सुन्दरक्रीड़ावनेनाद्य इदानीं नोऽस्माकं स्मरजा कामोत्पन्ना आर्त्तिः पीड़ा ननोद्येति न अपि तु नोद्यैव नाशनीयेत्यर्थः। कीदृशेन? इनप्रभाविहीनेन इनः सूर्य्यस्तस्य या प्रभा किरणास्तेन विहीनेन रहितेन ॥ २० ॥

सोऽहितहन्तापततः कांश्चिदपश्यद्धिताय हन्तापततः।
सस्नेहन्तापततस्तान्यदमी तोषमावहन्तापततः ॥

सः अहितहन्ता पततः कांश्चित् अपश्यत् हिताय हन्त आपततः।
सस्नेहं तापततः तान् यत् अमी तोषं आवहन्त आप ततः ॥ २१ ॥

सोऽहितेति। अहितानां शत्रूणां हन्ता नायकः स नलः हन्त हर्षे कांश्चित् पततः पक्षिणोऽपश्यत् अद्राक्षीत्। कीदृशान् पततः? हिताय सुखदानाय आपततः आगच्छतः। कीदृशः सः? तापततः तापेन ततो व्याप्तः कामज्वरपीड़ित इत्यर्थः। यद् यस्माद्धेतोरमी पतत्रिणो हंसास्तोषं सन्तोषमावहन्त अकुर्व्वत ततोहेतोः। सस्नेहं स्नेहपूर्व्वकं यथा स्यात् तथा सोयं नलस्तान् हंसानाप प्राप जग्राहेति यावत् ॥ २१ ॥

तन्तरसारसमानः सविहङ्गगणोऽब्रवीत्ससारसमानः।
गतहिंसारसमानस्तुद लभ्योऽनिष्क्रयः ससारसमानः ॥

तं तरसा रसमानः सः विहङ्गगणः अब्रवीत् ससारसमानः।
गतहिंसारस मा नः तुद लभ्यः निष्क्रयः ससारसमानः ॥ २२ ॥

तन्तरसेति। रसमानः शब्दायमानः। ससारसमानः

सारसैः पक्षिविशेषैः कृतो यो मानोऽभिमानस्तेन सहितः सविहङ्गगणो हंससमूह स्तरसा वेगेन तं नलमब्रवीदवदत् । तदेवाह हे गतहिंसारस गतः हिंसाया रसः प्रीति र्यस्य सः तत्संबुद्धिः । नोस्मान् मा तुद मा पीडय । त्वया स्वस्य सारः सामर्थ्यादीरूपादि र्वा तत्तुलरः निष्क्रयो लभ्यः प्राप्यः अस्मत्त इति शेषः ॥ २२ ॥

त्वं झषकेत्वङ्गत्वादधिकोभैम्यास्तुमोन्तिकेत्वङ्गत्वा ।
सा तेङ्केत्वङ्गत्वा सक्ता लल तत्प्रकाशकेत्वङ्गत्वा ॥

तं झषकेत्वङ्गत्वात् अधिकः भैम्याः स्तुमः अन्तिके तु अङ्ग त्वा ।
सा ते अङ्के तु अङ्गतु आसक्ता लल तत्प्रकाशके त्वं गत्वा ॥ २३ ॥

त्वमिति । हे अङ्ग नल तु पुनस्त्वं झषकेत्वङ्गत्वात् झषकेतोः कामस्याङ्गं तस्य भावस्तस्मादधिको नलः कामशरीरतोप्यधिकः सुन्दर इति यावत् । इति भैम्या अन्तिके निकटे। त्वा त्वां स्तुमः स्तोष्यामः । सा भैमी तेऽङ्के क्रोड़े तु पुनः अङ्गतु राजतु अधिगत्येत्यर्थः । कथम्भूता ? आसक्ता तत् सकाशके दमयन्तीनिकटे। स्वार्थे कः । गत्वा लल क्रीड़ां कुरु ॥ २३ ॥

इति हंसारामाया निकटं यामयक्तेव सारामाया।
जग्मुः सारामाया जगदुस्वालीभिरभिससारामाया ॥

इति हंसा रामायाः निकटं यामयक्ता इव सारामाया ।
जग्मुः सारामायाः जगदुः च आलीभिः अभिससार अमा या ॥ २४ ॥

इतीति। हंसाः सारामाया आरामेण सह वर्त्तमाना

सारामा तस्याः सारामायाः रमाया भैम्या निकटं समीपं जग्मु र्ययुः। पुनः इति वक्ष्यमाणमूचुः। या मयेन दैत्य-शिल्पिना कृता सारा उत्कृष्टा मायेव। या आलीभिः सखीभिः अमा सह अभिससार गतिमकरोत्। अमा सह समीपे चैत्यमरः॥ २४॥

श्रीसङ्काशास्यस्य त्वम्भैमिनलस्य शशिनिकाशास्यस्य।
अरिलोकाशास्यस्य यदि भार्यास्याः कुमारिकाशास्यस्य॥

श्रीसङ्काशा असि अस्य त्वं भैमि नलस्य शशिनिकाशास्यस्य।
अरिलोकाशास्यस्य यदि भार्या स्याः कुमारिकाशास्यस्य॥ २५॥

श्रीति। हे भैमि त्वं यदस्य नलस्य भार्या स्याः भवेस्तर्हि श्रीसङ्काशासि लक्ष्मीतुल्यासि श्रीवत्सङ्काशते शोभत इति सा। कीदृशस्य नलस्य? शशिना निकाशं तुल्यमास्यं वदनं यस्यासौ तस्य। एवमरिलोकानां या आशा वाञ्छा तामस्यति नाशयतीति सः तस्य एवं कुमारिका-शास्यस्य कुमारिकाभिरपरिणीताभिः स्त्रीभिराशास्यस्य वाञ्छितस्य॥ २५॥

इति हांसेनोदितया गणेन भैम्यामुदारसेनोदितया।
नवभासेनोदितया स्वरेण सपुनर्नलौकसेनोदितया॥

इति हांसेन उदितया गणेन भैम्या मुदारसे नोदितया।
न बभासे न उदितया स्वरेण सः पुनः नलौकसे अनोदि तया॥ २६॥

इतीति। इत्युक्तक्रमेण हांसेन गणेन हंससार्थेन उदितयो-

तया मुदा आनन्देन हेतुना रसे शृङ्गारे नोदितया प्रेरितया स्मरेण कामेन उदितया उदयम् प्राप्तया युवत्येति यावत्। एतादृश्या भैम्या न बभाषे इति न अपि तु बभाषे पुनस्तया भैम्या सहंसगणो नलौकसे नलगृहाय अनोदि प्रेषितः ॥२६॥

तावद्बहुधावायस्य श्रेण्यः पुनरस्य सन्निधावायस्य ।
तान्चनिधावायस्य व्यनुवंस्तुलनाय न त्रिबुधावायस्य ॥

ताः बहुधा वायस्य श्रेण्यः पुनः अस्य सन्निधौ आयस्य ।
तां च निधौ आयस्य व्यनुवन् तुलनाय न त्रिबुधा वा यस्य ॥ २७ ॥

ता इति । पुनस्ता वायस्यः हंसश्रेण्यः वयसाम्पक्षिणामिमाः वायस्यो हंसपंक्तयोऽस्य नलस्य सन्निधौ समीपे आयस्यागत्य तां भैमीं बहुधा नानाप्रकारेण व्यनुवन् अस्तुवन् तुष्टुवुरिति यावत् । किम्भूते ? सन्निधौ आयस्य धनागमस्य निधौ आकरे आश्रये वा । अस्य कस्य ? यस्य तुलनाय विबुधा अपि देवा अपि न भवन्ति वा शब्दोऽप्यर्थकः ॥ २७ ॥

इति सविनामानितया जह्रे भैम्यानलोपि नामा
नितया । स्वास्थ्यं नामानितया शिश्ये च विचिन्त्यतस्यनामानितया ॥

इति सः विना मानितया जह्रे भैम्या नलः अपि नाम अनितया ।
स्वास्थ्यं नामानि तया शिश्ये च विचिन्त्य तस्य न अमानितया ॥ २८ ॥

इतीति । इत्यनेन प्रकारेण विना हंसेन मानितया

पूजितया कृतः स्तुत्येति यावत् । नाम सम्भावनायाम् । स्वास्थ्यं सुखमनितयाऽप्राप्तया तया भैम्या । धीरोपि नलः जह्रे हृतः वशीकृत इति यावत् । पुनस्तस्य नलस्य नामानि विचिन्त्य नलनैषधेत्यादि चिन्तयित्वा शिश्ये सुप्तम् । कीदृङ् नलः ? अमानितया न उपलक्षितः मानिनो भावो मानिता तस्या अभावोऽमानिता तया न उपलक्षितः अभिमानयुक्त इति भावः ॥ २८ ॥

अथ ससमुद्रागस्य क्ष्मान्तस्यालङ्कृतेः समुद्रागस्य ।
यौवनमुद्रागस्य स्वसुतारत्नस्य सादमुद्रागस्य ॥

अथ ससमुद्रागस्य क्ष्मान्तस्य अलङ्कृतेः समुद्रागस्य ।
यौवनमुद्रागस्य स्वसुतारत्नस्य सादं उद्रागस्य ॥ २९ ॥

अथेति । अथानन्तरं समुद्रश्च अगश्च समुद्रागौ ताभ्यां सहितस्य । क्ष्मान्तस्य पृथ्वीपर्यन्तस्यालङ्कृतेरलङ्कारभूतस्य तस्य । समुद्रागस्य मुदमानन्दं राति ददातीति मुद्रः मुद्रश्चासावगश्च सः तेन सह वर्त्तते इति तादृशस्य । यद्वा राजा कीदृशः ? समुत् सहर्षः द्राक झटिति अस्य सुतारत्नस्येत्यर्थः । यद्वा मुच्चासौ रागोऽनुरागः स च मुद्रागौ ताभ्यां सहितस्य । एवं यौवनमुद्रा स्तनोद्रेकादिचिह्नं तद्गस्य प्राप्तस्य । एवम् उद्रागस्य उत् उद्गतो रागोऽनङ्गरागः पीडा वा यस्य तस्य । रागोमत्सरे लोहितादिषु । क्लेशादावनुरागे च गान्धारादाविति मेदिनी । स्वसुतारत्नस्य सादं अवसादम् कामजदुःखम् ॥ २९ ॥

दृष्ट्वा राजातनुत स्वयम्बरं विधिवदिन्दिराजातनुतः।
यस्य जराजातनुतः पृथग्व्यथासौजनाद्रराजातनुतः॥

दृष्ट्वा राजा आतनुत स्वयम्बरं विधिवत् इन्दिराजातनुतः ।
यस्य जराजा तनुतः पृथक् व्यथा असौ जनात् रराज अतनुतः ॥ ३० ॥

दृष्टेति द्वितीयेनान्वयः । असौ राजा भीमः स्वयम्बरं विधिवत् आतनुताकरोत् । यो राजा अतनुतः महत्तो जनात् मनुष्यात् रराज शुशुभे । यस्य तनुतो देहात् जराजा जरोत्पन्ना व्यथा पृथक् भिन्ना । वृद्धमध्ये सुन्दरो युवा चेति भावः । कीदृशो राजा ? इन्दिराजातनुतः इन्दिरा लक्ष्मी तस्याः सकाशाज्जातो यः काम स्तेन नुतः स्तुतः कामाधिकसुन्दर इति यावत् ॥३०॥

तं हासेनापालिः स्वयम्बरं क्षितिभुजां ससेनापालिः ।
न बभासेनापालिः स्रगेषु यैःशिरसि यारसेनापालि ॥

तं हासेन आप आलिः स्वयम्बरं क्षितिभुजां ससेनापालिः ।
न बभासे नापालिः स्रक् एषु यैः शिरसि या रसेन अपालि ॥ ३१ ॥

तमिति । क्षितिभुजां राज्ञामालिः पंक्ति र्हासेन हर्षादिना तं दमयन्त्याः स्वयम्बरमाप प्राप । यद्वा कीदृशी आलिः ? हासेन उपलक्षितेत्युपलक्षणे तृतीया । कीदृशी आलिः ? ससेनापालिः सेनापालयः सेनान्य स्तद्युक्ता । सा स्रक माला एषु राजसु न बभासे इति काकुः अपि

तु शुशुभे इत्यर्थः । सा का ? या स्रक् माला तैः राजभिः शिरसि रसेन स्नेहेन अपालि अरक्षि धृतेत्यर्थः । किम्भूता स्रक् ? नापालिः अपगता अलयो यस्याः सा अपालिः न अपालिः सभ्रमरेत्यर्थः तेषां शिरःसु इन्द्र-नीलादिमणिमत्तया भृङ्गाभावेपि भृङ्गवत्तया माला शोभते स्मेति ध्वनिः ॥३१॥

तां गां सेनाराजिः स्वर्गसदां यैः सदारसेनाराजि ।
आयासेनाराजिच्चयितरिपौचलतिविबुधसेनाराजि ॥

तां गां सेनाराजिः स्वर्गसदां यैः सदा रसेन अराजि ।
आयासेन आर आजिच्चयितरिपौ चलति विबुधसेनाराजि ॥ ३२ ॥

तास्मिति । आजिच्चयितरिपौ आजौ संग्रामे चयिता नाशिता रिपवः शत्रवो येन सः । तस्मिन् विबुधसेनाराजि विबुधा देवा स्तेषां या सेना तस्या राट् सः । तस्मिन् इन्द्रे चलति सति स्वर्गसदां देवानां सेनाराजिः सेनापंक्तिरायासेन श्रमेण तां गां विदर्भदेशोपलक्षितां भुवम् आर प्राप । यैः स्वर्गसद्भिः सदा सर्व्वदा रागेण प्रेमऽनुरागेण अराजि शोभितम् ॥ ३२ ॥

सोथ परमहस्तेन प्रापि नलेनोत्सवः परमहस्तेनः ।
स्फुरितपरमहस्तेन प्रबभौरविणेवततपुरं परम हस्तेन ॥

सः अथ परमहस्तेन प्रापि नलेन उत्सवः परमहस्तेनः ।
स्फुरितपरमहस्तेन प्रबभौ रविणा इव तत्पुरं परं अहः तेनः ॥ ३३ ॥

सोयेति । अथानन्तरं परमहस्तेन परम उत्कृष्टो हस्तः करो यस्य सः तेन आजानुलम्बितभुजेनेत्यर्थः । स स्वयम्बरः प्रापि प्राप्तः । कथम्भूतः स्वयम्बरः ? परमहस्तेनः परेषां महाः परमहा स्तेषां स्तेनस्तस्करः । महउत्सवः । परमुत्कृष्टं तत्पुरं भीमनगरं तेन नलेन प्रबभौ शुशुभे । केन किमिव । स्फुरितपरमहस्तेन । स्फुरिता परमा उत्कृष्टा हस्ताः किरणाः यस्य तेन रविणा अहः दिगमिव ॥ ३३ ॥

क्षिप्तलसन्नालीकानहितेषुमुखेन्दुतुलितसन्नालीकान् ।
राज्ञःसन्नालीकान् कान्तिर्विबुधांश्चनाहसन्नालीकान् ॥

क्षिप्तलसन्नालीकान् अहितेषु मुखेन्दुतुलितसन्नालीकान् ।
राज्ञः सन्नालीकान् कान्तिः विबुधान् च न अहसत् नाली कान् ॥ ३४ ॥

क्षिप्तेति । नाली नलस्येयं नाली कान्तिः कान् राज्ञो नृपान् च पुनः कान् विबुधान्नाहसदपितु सर्वानेव । कीदृशान् ? अहितेषु शत्रुषु क्षिप्तलसन्नालीकान् क्षिप्ताः प्रेरिताः लसन्तो दीप्यमाना नालीका बाणविशेषा यै स्तान् । एवं मुखेन्दुतुलितसन्नालीकान् मुखेन्दुभिस्तुलितानि सन्ति समीचीनानि नालीकानि पद्मानि यै स्तान् । एवं सन्नालीकान् सन्नमपगतमलीकं कपटादि येषां ते तान् । षन् ष्विसरणगत्योः क्तः ॥ ३४ ॥

अजनिकलापास्यन्तं स्वयशोऽनिजकं महःकला पास्यन्तम् । शत्रुकलापास्यन्तमप्रेच्य नलं सुरततिः कलापास्यन्तम् ॥

अजनि कला पास्यन्तं स्वयशः अनिजकं महः कला अपास्यन्तम् ।
शत्रुकलापास्यन्तं प्रेच्य नलं सुरततिः कलापस्यं तम् ॥ ३५ ॥

अजनीति । सुरतति दैवपंक्ति स्तं नलं प्रेच्य दृष्ट्वा कला जडा किं कर्त्तव्यता मूढ़ा जातेत्यर्थः । कीदृशं नलम् ? स्वीयं यशः पास्यन्तं रक्षन्तम् । अनिजकमस्वकीयं महस्तेजः प्रभुत्वमपास्यन्तमरक्षन्तम् । यद्वा निजकं स्वकीयं महस्तेजः आपास्यन्तं दूरतः प्रसारयन्तमित्यर्थः । एवं शत्रुकलापास्यन्तं शत्रूणां कलापाः समूहा स्तानस्यति चिपतीति सः तम् । अथवा अस्यन्तः क्षतिना अन्तो यस्य एतादृशः शत्रुकलापो यस्य । एवं कलापास्यं कलां पातीति कलापश्चन्द्रस्तत्सदृशमुखम् । कलापो भूषणे बर्हे तूणीरे संहतेपि चेत्यमरः ॥ ३५ ॥

स्वर्निलयानामनलं कृतमपिजेतुन्ततिः श्रियानामनलम् । यमजेयानामनलं प्रोचेशक्रस्तमरिचयाना मनलम् ॥

स्वर्निलयानां अनलङ्कृतं अपि जेतुं ततिः श्रिया नाम नलम् ।
यं अजेयानां अनलम् प्रोचे शक्रः तं अरिचयानां अनलम् ॥ ३६ ॥

स्वरिति । शक्र इन्द्रस्तं नलं प्रोचे उवाच । नाम सम्भावनायाम् । तं कं ? यमनलङ्कृतमप्यलङ्काररहितमपि

नलम् । स्वर्निलयानां देवानां ततिः श्रेणिः श्रिया शोभया जेतुं तिरस्कर्त्तुमनलं न अलं समर्था । किम्भूतं नलं ? अजेयानामन्यैर्जैतुमशक्यानामरिचयानां शत्रुयूथानामनलमग्निं दाहकत्वात् ॥ ३६॥

वद कामायासन्न स्त्वम्भैम्यै यद्गुणाः श्रमायासन्नः ।
श्रेष्ठतमायासन्न स्त्वान्द्रष्टा नतु जनः स्वमायासन्नः ॥

वद कामायासं नः त्वं भैम्यै यद्गुणाः श्रमाय आसन् नः ।
श्रेष्ठतमा या आसन्नः त्वां द्रष्टा न तु जनः स्वमायासन्नः ॥ ३७ ॥

वदेति । हे नल त्वं तस्यै भैम्यै नोऽस्माकं कामायासं कामेन कृतो य आयासस्तं वद त्वत्कृते देवान् कामः पीड़यतीति भावः । तस्यै कस्यै ? यद्गुणाः यस्याः गुणा नोऽस्माकं श्रमाय खेदाय आसन् अभूवन् शमायेति पाठे शान्त्यै इत्यर्थः । अथ च या श्रेष्ठतमा अत्यन्तमुत्कृष्टा । पुनस्तत्वेत्यर्थात् आसन्नो जनो द्वारपालकादिस्त्वां न द्रष्टा न द्रक्ष्यति । कीदृशस्त्वम् ? स्वमायासन्नः स्वस्य तव मत्प्रसादजन्या या माया कपटः तयासन्न आच्छन्नः ॥३७॥

इति सरवेकेहास्तन्न्यस्य समकुलं सुरप्रवेकेहास्त ।
तामविवेकेहास्तः श्रयति स्त्री तत्र पार्थिवेकेहास्त ॥

इति सरवे के हास्तं न्यस्य सा सुकुलं सुरप्रवेकी अहास्त ।
तां अविवेकेहास्तः श्रयति स्त्री तत्र पार्थिवे का इह आस्त ॥ ३८ ॥

इतीति। सुरप्रवेके सुरश्रेष्ठे इन्द्रे इति उक्तप्रकारेण सरवे सशब्दे सति इन्द्रे एवमुक्तवति सतीत्यर्थः। के मस्तके हास्तं हस्तसम्बन्धिमुकुलं न्यस्य मस्तके अञ्जलिं कृत्वा स नलः तां दमयन्तीम् अहास्त जगाम। कीदृशः सः? अविवेकेहास्तः अविवेकस्याज्ञानविशेषस्य या ईहा चेष्टा तया अस्तः रहितः। यद्वा नलं दृष्टवती दमयन्ती नान्यं वरिष्यतीति। इन्द्रस्य योऽविवेक स्तज्जनितया चेष्टया अस्तः प्रेषित इत्यर्थः। पार्थिवे नले अयति गतवति सति का स्त्री इह स्थले आस्त अतिष्ठत् न कापीत्यर्थः॥ ३८॥

हरिपवमानयमानान् दूतोऽस्मिनलोमहारमानयमानान्। भवतीं मानयमाना न्भैमि सुरान्विद्धि महमिमानयमानान्॥

हरिपवमानयमानां दूतः अस्मि नलः महारमानयमानान्।

भवतीं मानयमानान् भैमि सुरान् विद्धि महं इमान् अयमानान्॥ ३९॥

हरीति। हरिरिन्द्रो ऽग्निश्च पवमानो वरुणो वायुश्च यमः कृतान्त स्तेषां दूतो नलनामाहमस्मि। इमानिन्द्रादीन् सुरान् महत्तव स्वयम्बरमयमानान् प्राप्तान् विद्धि जानीहि। कीदृशान्? महारमानयमानान् रमा लक्ष्मीः नयो नीतिः मानश्चित्तसमुन्नतिः महान्तो रमा नयमाना येषां ते तान्। एवं भवतीं त्वां मानयमानान् स्वीकुर्वतः॥ ३९॥

तुल्येऽप्सरसा देहिप्रभवो मग्नाः स्मरप्रसरसादे हि ।
तानभिसर सा देहि स्रजञ्च नाकात्सुखञ्चसरसाद्देहि ॥

तुल्ये अप्सरसा देहिप्रभवः मग्नाः स्मरप्रसरसादे हि ।
तान् अभिसर सा देहि स्रजं च नाकात् सुखं च सरसात् एहि ॥४०॥

तुल्यइति । हे अप्सरसा तुलेर रम्भादिसदृशे । देहि-प्रभवो मनुष्यादीनामीश्वरा देवाः स्मरप्रसरसादे स्मरस्य यः प्रसरः प्रसारस्तज्जन्ये सादे दुःखे मग्नाः । हि यतः । अतः सा त्वं तान् देवानभिसर स्वीकुरु । पुनः स्रजं मालां देहि । सरसादमृतादियुक्तान्नाकात् स्वर्गात् सुख-मेहि प्राप्नुहि ॥ ४० ॥

इति कृतसामारवतः सुरलोकात्तन्मुखेन सामा रवतः । न रिरंसामार वत स्थलादिव नलोत्कमान-सामारवतः ॥

इति कृतसामारवतः सुरलोकात् तन्मुखेन सा मारवतः ।
न रिरंसां आर वत स्थलात् इव नलोत्कमानसा मारवतः ॥ ४१ ॥

इतीति । सा भैमी सुरलोकादिन्द्रादिदेवगणात् रिरंसां रन्तुमिच्छां क्रीडां न आर न प्राप । किम्भूतात् तन्मुखेन नलमुखेन इति पूर्वोक्त न्यायेन कृतसामारवतः कृतः सामस्य

सान्त्वनाया आरवः शब्दो येन ततः। एवं मारवतः मारो मदनस्तद्धतः। वत खेदे। कीदृशी सा? नलोत्कमानसा नले उत्कमुत्कण्ठितं मानसं चेतो यस्याः सा। कस्मादिव? मारवतः स्थलादिव मरोरिदं मारवं तादृशात् स्थलादिव मरुसम्बन्धिदेशादिव। यथा हंसः नलोत्कमानसः नले जलोत्पन्नपदार्थे विषे उत्कण्ठितचित्तो मरुसंभूतवस्तुतो रिरंसां नाप्नोति। यद्वा कृतसामेति दमयन्त्या विशेषणं कृतं साम सान्त्वनं यया सा। आरवतः शब्दं कुर्व्वत इति सुरलोकविशेषणम् ॥४१॥

साविरराजायतया वीक्ष्य दृशा तं स्मरातुराजा-
यतया। स्थितिरत्राजायतया द्युसदाञ्चाभाषि
निषधराजायतया ॥

सा विरराज आयतया वीक्ष्य दृशा तं स्मरातुरा अजायत या।
स्थितिः अत्र अजायतया द्युसदां च अभाषि निषधराजाय तया ॥ ४२ ॥

सेति। सा भैमी विरराज विशेषेण शुशुभे। सा का? या आयतया विशालया दृशा दृष्या। अत्र भवने। तं नलं वीक्ष्य दृष्ट्वा स्मरातुरा कामव्याप्ता अजायत अभूत्। अपरं तया भैम्या निषधराजाय नलाय द्युसदां दिवि सीदन्तीति द्युसदो देवास्तेषां स्थितिः स्थानं अजायतया जायायाः भावो जायता न जायता अजायता तया अभाषि अवादि। स्त्रीत्वेन देवान् न वृतवतीति भावः ॥४२॥

तस्या देवाद्यस्य प्रणम्य च नलेन धीः पदेवाद्यस्य ।
सति निनदे वाद्यस्य स्वयं प्रियायाः पदं मुदेवाद्यस्य ॥

तस्याः देवाद्यस्य प्रणम्य च नलेन धीः पदे अवादि अस्य ।
सति निनदे वाद्यस्य स्वयं प्रियायाः पदं मुदे अवात् यस्य ॥ ४३ ॥

तस्येति । नलेनास्य देवाद्यस्य सुरमुख्यस्येन्द्रस्य पदे चरणे प्रणम्य अभिवाद्य तस्याः भैम्याः धी र्बुद्धिरवादि उक्ता । कस्मिन् सति ? वाद्यस्य तूर्य्यादे र्निनदे शब्दे सति । यस्य नलस्य मुदे आनन्दाय प्रियायाः पदं वाक्यम् अवात् प्राप । यद्वा अस्य कस्य ? यस्येन्द्रस्य मुदे हर्षाय प्रियायाः पदं स्थानमवात् जगाम नल इति शेषः । भैमी त्वां न वृणुत इत्युक्तवानिति भावः ॥४३॥

अथ तरसा रङ्गेयन्नृपतिगणोऽस्थितपदेषु सारङ्गेयं ।
चञ्चलसारङ्गेयन्दमयन्ती चाचितुलितसारङ्गेयं ॥

अथ तरसा रङ्गे अयं नृपतिगणः अस्थित पदेषु सारं गेयम् ।
चञ्चलसारङ्गे अयन् दमयन्ती च अचितुलितसारङ्गा इयम् ॥ ४४ ॥

अथेति । अथानन्तरमयं नृपतिगणो राजलोको रङ्गे स्वयम्वरसभायां तरसा वेगेन पदेषु भीमकल्पित-

मञ्चस्थानेषु अस्थित आसीत् । नृपतिगणः पदान्यकृत इति पाठे पदानि चरणविन्यासान् अकृत अकरोदित्यर्थः । किं कुर्वन् ? सारम् उत्कृष्टं गेयम् अयन् गीतं शृण्वन्निति भावः गत्यर्थो ज्ञानार्थः । कीदृशे रङ्गे ? चञ्चलसारङ्गे सौरभ्याधिक्येन चञ्चलाः सारङ्गा भ्रमरा यत्र तादृशे । यद्वा चञ्चलसारङ्गे खेलत्पक्षिविशेषे इत्यर्थः । यद्वा चञ्चला गमनागमनशीलाः सारङ्गा गजा यस्मिन् तस्मिन्नित्यर्थः । पुनरियं दमयन्ती स्वोचितपदेषु अस्थित इति पूर्वेणान्वयः । कीदृशीयं ? अक्षितुलितसारङ्गा अक्षिभ्यां तुलितः सारङ्गो मृगो यया सा । सारङ्गश्चातके भृङ्गे कुरङ्गे च मतङ्गजे इत्यमरः ॥४४॥

व्यधुरवनामान्येषु प्रजा नृपेष्वथ निवेद्य नामान्येषु ।
सूतैर्नामान्येषु प्रकीर्त्यमानेषु शोभनामान्येषु ॥

व्यधुः अवनामान् येषु प्रजाः नृपेषु अथ निवेद्य नामानि एषु ।
सूतैः नाम अन्येषु प्रकीर्त्यमानेषु शोभना मान्येषु ॥ ४५ ॥

व्यधुरिति । अथ एषु नृपेषु राजसु नामानि निवेद्य उक्त्वा सूतैः मागधैः प्रकीर्त्यमानेषु स्तूयमानेषु वन्दिभिः कृतपरिचयेषु सत्सु । तथा नाम सम्भावनायाम् । अन्येषु मान्येषु देवेषु प्रकीर्त्यमानेषु सत्सु एषु केषु ? येषु नृपेषु प्रजास्तत्या जना अवनामान् नमस्कारान् व्यधुश्चक्रुः ॥४५॥

सांगेनन लसमानाननलसमानानमुत्र कतिचित्पुरुषान्। प्रैक्षत न न लसमानाननलसमानानमून्न तेषाम्भेदः॥

साङ्गेन नलसमानान् अनलसमानान् अमुत्र कतिचित्पुरुषान्।
प्रैक्षत न न लसमानान् अनलसमानान् अभूत् न तेषां भेदः॥ ४६॥

सागद्दति। सा शोभना भव्या भैमी अमुत्र स्वयम्बरे कतिचित्पुरुषान् न प्रैक्षत इति न किन्तु ददर्श। कीदृशान्? अनलसमानान् अग्नितुल्यान्। एवं लसमानान् देदीप्यमानान्। एवम् अनलसमानान् न अलसमाना अनलसमानास्तान्। अङ्गेन शरीरेण नलसमानान् नलेन सदृशान् यतस्तेषां नलसमानानां पुरुषाणामिन्द्रादीनां भेदो विविच्य ज्ञानं नाभून्न जातम्॥ ४६॥

रुचिक्षतनासत्यागाः स्फुरतु नलोयदि वच्मि नासत्यागाः। अपि दीना सत्यागान्न्याययुतेनैव वर्त्मना सत्यागा॥

रुचिक्षतनासत्यागाः स्फुरतु नलः यदि च वच्मि न असत्याः गाः।
अपि दीना सती अगां न्याययुतेन एव वर्त्मना सत्यागा॥ ४७॥

रुचीति। परं यदहं सती साध्वी यदहं असत्याः गाः वाणीः न वच्मि न वदामि। तथा दीनापि यदि न्याययुतेनैव वर्त्मना धर्म्ममार्गेणैव अगां गच्छामि। यदहं

सत्यागा त्यागेन दानेन सह वर्त्तमाना तदा नलः स्फुरतु इन्द्रादिभिन्नत्वेन ज्ञानविषयो भवतु। कीदृशो नलः? रुचिकृतनासत्यागाः रुच्या कान्त्या कृतः नासत्ययोर्दस्रयोः आगोऽपराधो येन दस्राधिकसुन्दर इति यावत् ॥ ४७ ॥

यदि वाभावं न्यस्य स्थितास्मिनलएवनरविभावन्यस्य।
देवसभावन्यस्य द्विपस्य वपुषो भवेद्विभावन्यस्य ॥

यदि वा भावं न्यस्य स्थिता अस्मि नले एव नरविभौ अन्यस्य।
देवसभावन्यस्य द्विपस्य वपुषः भवेत् विभा अवनी अस्य ॥ ४८ ॥

यदिवेति। वा समुच्चये यदि चेत् अन्यस्यान्यस्मिन् पुरुषे भावं चित्ताभिप्रायं न्यस्य त्यक्त्वा। निपूर्व्वस्यासुक्षेपण इत्यस्य न्यस्येति रूपम्। अहं नलएव स्थितास्मि तिष्ठामि वर्त्ते। तर्हि अस्य नलस्य वपुषः शरीरस्य विभा कान्तिः अवनी रक्षिका भवेद् भवतु। कीदृशे नले? नरविभौ नराणां विभु र्नरविभु स्तस्मिन्। कीदृशस्य वपुषः? देवसभावन्यस्य द्विपस्य देवानां सभैव वनं तत्रोत्पन्नस्य द्विपस्य हस्तिनः। अन्यपि द्विपो वन्यो भवति ॥ ४८ ॥

कृतभावासावनितानिति भुवमैचत्सुरान् सुवासावनिता। स्वपतिं वा सावनिताचिह्नं धार्म्मिकजने भुवासावनिता ॥

कृतभावा असौ अनितान् इति भुवं ऐचत् सुरान् सुवासाः वनिता।
स्वपतिं वा सावनिताचिह्नं धार्म्मिकजने भुवा आस अवनिता ॥ ४९ ॥

क्ष्मेति। असौ वनिता भैमी भुवं भूमिमनितान् अप्राप्तान् भूमिस्पर्शरहितान् सुरान् देवान् ऐक्षत् अपश्यत्। कथं भूता सा? इत्यनेन प्रकारेण क्षतभावा क्षतो भावश्चित्ता-भिप्रायो यया सा। एवं सुवासाः सुष्ठु शोभनं वासो वस्त्रं यस्याः सा। वा शब्दश्चार्थः च पुनः स्वपतिं नलं ऐक्षत्। कीदृशं स्वपतिं? अवन्या सह वर्त्तमानः सावनिः तस्य भावः सावनिता सैव चिह्नं यस्य तं भूमियुक्तपादत्वात् देव-भिन्नत्वेन अपश्यदित्यर्थः। देवानान्तु तद्राहित्यं स्वाभा-विकम्। तं कम्? यस्य नलस्य अवनिता अवनं रक्षण-मस्यास्तीत्यवनी अवनिनो भावोऽवनिता रक्षणवत्ता धार्म्मिकजने साधुनि जने ध्रुवा निश्चिता आस भवति स्म आसेति बभूवार्थेऽव्ययम् ॥ ४६ ॥

स्वरिरंसादेवाल्याकुलया दृष्ट्यार्थितापि सा देवाल्या।
वपुषि ससादे बाल्या दवृत्त नलमुपस्थितं रसादे-वाल्या ॥

स्वरिरंसादा इव अल्याकुलया दृष्ट्या अर्थितापि सा देवाल्या।
वपुषि ससादे वाल्यात् अवृत्त नलं उपस्थितं रसात् एव आल्या ॥ ५० ॥

स्वेति। सा भैमी आल्या सख्या करणेन रसादेव प्रीतेरेव तं नलमवृत्त अवृणुत। कीदृशं नलं? उपस्थितं समीपे तिष्ठन्तम्। कस्मिन् सति? बाल्याद्बाल्यमारभ्य बाला नवयौवना तस्याभावो बाल्यं तस्मात् बाल्याद्धेतो वी

वपुषि सप्रमादे सति सखेदे सति । कीदृशी सा ? देवालया देवपंक्त्या अर्थितापि याचितापि । एवं दृष्टा दृशा स्वरिरंसादा इव स्वस्य रिरंसा रन्तुमिच्छा तां ददातीति स्वक्रीड़ाप्रदा इव । कीदृश्या दृष्ट्या ? अलयाकुलया भ्रमर इव चञ्चलया ॥ ५० ॥

सत्सदसोमाननया रुद्रसमोयः स्वतेजसोमाननया ।
प्रवृतः सोमाननया नलोबभौभुविगुणेनसोमाननया ॥

सत्सदसः माननया रुद्रसमः यः स्वतेजसा उमा न न या ।
प्रवृतः सोमाननया नलः बभौ भुवि गुणेन सः अमान् अनया ॥५१॥

सदिति ! स नलो बभौ शुशुभे । कीदृशः ? अनया सोमाननया चन्द्रवदनया भैम्या प्रवृतः पतित्वेन स्वीकृतः । स कः ? यः सत्सदसः सतां देवानां साधूनां वा यत्सदः सभा तस्याः या मानना तया । रुद्रसमः शिवसदृशः रुद्रांशत्वात् । अनया कया ? स्वतेजसा पातिव्रत्येन उमा नेति न किन्तूमैव एतेन शिवपार्व्वतीयोगोपि वर्णितः । कीदृशो नलः ? गुणेन शौर्य्यादिना भुवि पृथिव्यां अमान् न माति इति अमान् अधिकगुण इत्यर्थः ॥ ५१ ॥

मदद्भावरमस्यज्ज्ञात्वाथमनोगुरुप्रभावरमस्य ।
सुरवृषभावरमस्य प्रदिश्य जग्मुर्गतप्रभावरमस्य ॥

मदद्भौ वरं अस्यत् ज्ञात्वा अथ मनः गुरुप्रभावरमस्य ।
सुरवृषभाः वरं अस्य प्रदिश्य जग्मुः गतप्रभावरमस्य ॥५२॥

मदेति । अथ सुरर्षभा देवश्रेष्ठा इन्द्रादयोऽस्य नलस्य वरं प्रदिश्य दत्वा जग्मु ययुः । वरदाने हेतुमाह अस्य नलस्य मनश्चित्तं मदद्भ्यौ मदश्च दम्भश्च तौ चरं झटिति अस्यत् त्यजत् ज्ञात्वा । कीदृशस्यास्य ? गुरुप्रभावरमस्य प्रभावश्च रमा च प्रभावरमे गुर्व्यौ प्रभावरमे यस्य तस्य । यद्वा गुर्वी प्रभावेन रमा लक्ष्मी यस्य । एवं गतप्रभावरमस्य । गतो नष्टः प्रभायाः कान्तेरवरमो ऽशोभनत्वं यस्मात् सः तस्यातिशयितकान्तेरित्यर्थः ॥५२॥

गुरुमहिमापरमायास्तक्ष्मी नल एषवसतिमाप रमायाः । प्रियययामा परमायाः सपुरमगुर्यत्र तं क्षमापरमायाः ॥

गुरुमहिमा परमायालक्ष्मी नलः एषः वसतिं आप रमायाः ।
प्रियया अमा परमायाः स्वपुरं अगुः यत्र तं क्षमापरं आयाः ॥५३॥

गुर्विति । एष नलः प्रियया भैम्या अमा सह तत्स्वपुरं स्वनगरमाप प्राप । स्यादमा सन्निधानार्थे सहार्थे इति हेमचन्द्रः । कीदृशः ? गुरुमहिमा महतो भावो महिमा गुर्वी महिमा यस्य सः । एवं परमायालक्ष्मी परेषां शत्रूणां या माया तस्याः लक्ष्मी रिपुकपटनाशक इत्यर्थः । कीदृशं स्वपुरम् ? परमाया उत्कृष्टायाः रमायाः लक्ष्म्याः वसतिं स्थानम् । तत्किम् ? यत्र पुरे आयाः धनागमनानि क्षमापरं सहिष्णुताशीलं तं नलमगुः प्रापुः ॥५३॥

शशिना समहासमहा नगरे जनता समहासमहास्त मुदम्। अतिभासुरया सुरया व्यहरद्व्यतनोत् सुरया सुरयागमपि॥

शशिना समहासमहा नगरे जनता समहा समहास्त मुदम्।
अतिभासुरया सुरया व्यहरत् व्यतनोत् सुरया सुरयागं अपि॥५४॥

शशिनेति। जनता जनसमूहः नगरे नलपुरे मुदं हर्ष समहास्त प्राप। ओहाङ्गतावित्यस्य धातोः प्रयोगः ये गत्यर्थास्ते प्राप्त्यर्था ज्ञानार्थाश्च। किम्भूता जनता? शशिना चन्द्रेण समहासमहा समं हासस्य महस्तेजो यस्याः सा। महश्चोत्सवतेजसोरित्यमरः। एवं समहामहेन उत्सवेन सह वर्त्तमाना सा। एवं सुरया शोभनो रयः शब्दो यस्याः सा सुरया। पुनः जनतैव सुरया मदिरया व्यहरत् चिक्रीड। सुरयागमपि देवार्च्चनमपि व्यतनोत् अकरोत्। कीदृश्या सुरया? भासुरया स्वच्छया॥५४॥

इति बोधिनीटीकासहिते श्रीकालिदासकृते
नलोदये सत्काव्ये प्रथमोच्छ्वासः।

——

## द्वितीयः सर्गः ।



अथ रतिरेकान्तेन प्रापि नलेनात्र मन्दिरेकान्तेन।
ताम्पुनरेकान्तेन प्राप्तवता रिपुमदातिरेकान्तेन॥

अथ रतिः एकान्तेन प्रापि नलेन अत्र मन्दिरे कान्ते न।
ताम् पुनः एकां तेन प्राप्तवता रिपुमदातिरेकान्तेन ॥१॥

अथेति। अथानन्तरं कान्तेन कमनीयेन। एवं तां भैमीं पुनरेकां मह्रीं च प्राप्तवता। यद्वा। एकां मुख्यां तां भैमीमेव प्राप्तवता। एवं रिपुमदातिरेकान्तेन रिपूणां शत्रूणां मदो गर्व्वस्तस्यातिरेक आधिक्यं तस्यान्तेन नाशकेन। तेन नलेन। एकान्तेनातिशयेनात्र मन्दिरे रतिः क्रीड़ा प्रापि प्राप्ता। यद्वा। एकान्तेऽत्र मन्दिरे रतिः न प्रापीति न किन्तु प्राप्तैव काक्वर्थे नञ् ॥१॥

बभौ स सारसागरश्चकास सा रसार्द्रधीः।
मधुः ससारसारवस्तदा ससार सार्त्तवः॥

बभौ स सारसागरः चकास सा रसार्द्रधीः।
मधुः ससारसारवः तदा ससार सार्त्तवः ॥२॥

बभाविति। सारस्य बलस्य सागरः समुद्रः स नलो बभौ शुशुभे। सारो बले स्थिरांशे चेत्यमरः। एवं रसार्द्रधीः रसेन प्रेम्णा आर्द्रा रसकोमला धी बुद्धिर्यस्याः सा दमयन्ती चकास शुशुभे। तदा तस्मिन्नवसरे मधु र्वसन्तः ससार आजगाम। मधुश्चैत्रर्त्तुदैत्येष्विति हेम-चन्द्रः। कीदृशो मधुः? ससारसारवः। सारसानामारवः शब्दस्तेन सहितः। पुनः कीदृक्? सार्त्तवः ऋतौ भवमार्त्तवं पुष्पादि तत्सहितः। लृगतावित्यस्य लिटि ससारेति ॥२॥

समुदधिताशालीनां करेण कणिशाग्ररुचिजिता शालीनाम्। दिनभर्त्ता शालीना मिव नलिनीमथ समुत्थिताशालीनाम् ॥

समुदधित आशालीनां करेण कणिशाग्ररुचिजिता शालीनाम्।
दिनभर्त्ता शालीनां इव नलिनीं अथ समुत्थिता आशा आलीनाम् ॥३॥

समुदधीति। दिनभर्त्ता सूर्य्यः करेण किरणेन नलिनीं समुदधित समुत्थापितवान् विकाशयामासेति यावत्। अथानन्तरमलीनां भ्रमराणामाशा इच्छा समुत्थिता उदिता। कीदृशेन करेण? शालीनां धान्यानां कणि-शाग्ररुचिजिता कणिशाग्रस्य या रुक् तां जयतीति तत्तेन व्रीहिमञ्जर्य्यग्रकान्तिजिता कणिशं शस्यमञ्जरीत्यमरः। कीदृशीं नलिनीं? अशालीनाम् चन्द्रकरस्पर्शात् आशासु दिक्षु लीनां अदर्शनगताम्। कामिव? शालीनामिव लज्जितामिव। अन्यापि परपुरुषकराकृष्टा लज्जिता

भवति । परपुरुषभुक्तापि स्वामिना न त्यक्ता करेणोद्धृता तत्र षिङ्गानाम् आशा भवतीति भावः अखिः षिङ्गे च षट्पदे इति रन्तिः ॥ ३ ॥

कुरवाप च सारसकाकुरवान् कुरवाख्यनगोपि
तदाङ्कुरवान् । कमलङ्कृतवद्गतपङ्कमलं कमलं
न विलोभयितुङ्कमलम् ॥

कुः अवाप च सारसकाकुरवान् कुरवाख्यनगः अपि तदा अंकुरवान् ।
कं अलंकृतवत् गतपङ्कमलं कं अलं न विलोभयितुं कमलम् ॥ ४ ॥

कुरवापेति । तदा वसन्तकाले कुः पृथिवी सारसकाकुरवान् सारसानां काकवो मनोहरा ये रवाः शब्दा स्तान् अवाप प्राप । कुरवाख्यनगोपि कुरवकवृक्षोप्यङ्कुरवान् जात इति शेषः । कमलं पद्मं कञ्जलं अलङ्कृतवत् शोभयत् । एवं कं पुरुषं विलोभयितुं न अलं अपि तु सर्वानेव रञ्जयितुं समर्थम् । कीदृशं कम् ? गतपङ्कमलं गतः पङ्करूपो मलो यस्य तत् तं कर्दमरहितमित्यर्थः ॥४॥

अगुरतिमहिमानीतस्ततोरविमहांसि गुरुतमहिमानीतः । भवनं महि मानीतः स्वरेण परितः
शराख्यमहिमानीतः ॥

अगुः अतिमहिमानि इतस्ततः रविमहांसि गुरुतमहिमानीतः ।
भवनं महि मानी इतः स्वरेण परितः शराख्यं महिं आनीतः ॥५॥

अगुरतीति। रविमहांसि सूर्य्यतेजांसि गुरुतमहिमानीतः अतिशयेन गुरुर्गुरुतमा गुरुतमा चासौ हिमानी च सा तया ततः पक्षस्यास्तस्तिः इतस्ततः अगुः प्रासरन्। कीदृशानि रविमहांसि? अतिमहिमानि अत्यन्तं महिमा येषां तानि महाप्रभावाणि। मानी अभिमानी स नलः महिमहत्सवस्तद्युक्तं भवनं प्रासादम् इतः प्राप्तः। कीदृशो मानी? परितः समन्तात् स्मरेण कामेन शराख्यम् अहिं सर्पमानीतः प्रापितः सर्पसदृशस्ववाणगोचरीकृत इत्यर्थः कामपीड़या रविरश्मिप्रतापेन च वहिः स्थातुम् अशक्नुवन् गृहं गत इति भावः॥ ५॥

**स्मरसूचितया जगतः क्षितिसूचितयाभवद्धि चम्पकमुकुलम्। तदसूचि तया व्यथया निरसूचितया यया वियुग्दम्पतिकौ॥**

स्मरसूचितया जगतः क्षितिसूचितया अभवत् हि चम्पकमुकुलम्।
तत् असूचि तया व्यथया निरसू चितया यया वियुग्दम्पतिकौ॥ ६॥

स्मरेति। हि निश्चये तच्चम्पकमुकुलं चम्पककुड्मलं स्मरसूचितया अनङ्गसूचेर्भावस्तनाभवत् जातम्। तत् किम्? यन्मुकुलं जगतः क्षितिसूचितया जगतः संसारस्य क्षितौ प्रहारे सुतरामुचितया योग्यतया तया तज्जन्यया व्यथया असूचि ज्ञापितम्। तया कया? यया चितया वृद्धिं प्राप्तया व्यथया वियुक् दम्पतिकौ विरहितस्त्रीपुरुषौ निरसू गतप्राणौ कृतौ। स्वार्थे कः॥ ६॥

विरलोच्चपलाशस्य प्रचुरम्पुष्पं बभूव च पलाशस्य।
स्मरनीचपलाशस्य प्राश्याध्वगपिशितचारु चपला-
शस्य ॥

विरलोच्चपलाशस्य प्रचुरं पुष्पं बभूव च पलाशस्य ।
स्मरनीचपलाशस्य प्राश्य अध्वगपिशितचारु चपलाशस्य ॥७॥

विरलइति । पुनः विरलोच्चपलाशस्य विरलानि अप्रचुराणि उच्चानि पलाशानि पत्राणि यस्य पत्रम्पला-शञ्छदनन्दलम्पर्णञ्छदः पुमानित्यमरः। तस्य पलाशस्य ब्रह्मवृक्षस्य प्रचुरं पुष्पं बभूव जातम्। कीदृशं पुष्पम् ? चपलाशस्य चपला आशा तृष्णा यस्य तस्य स्मरनीचपला-शस्य स्मर एव नीचस्तुच्छः पलाशो मांसाशी राक्षसस्तस्य प्राश्याध्वगपिशितचारु प्राश्यं भक्षणयोग्यं यत् अध्वगस्य पथि-कस्य पिशितं मांसं तद्वच्चारु मनोहरम्। पथिकप्राणहार-कत्वेन स्मरस्य राक्षसतुल्यत्वम् ॥ ७ ॥

ऋतौ बभुर्निशाङ्कया विभा विभा विभा विभाः ।
कलाश्च तेषु सत्पते रदा रदा रदा रदाः ॥

ऋतौ बभुः निशाङ्कयाः विभाविभाविभौ द्रुभाः ।
कलाः च तेषु सत्पतेः अदारदारदाः रदाः ॥८॥

ऋताविति । विभाविभाविभौ विभावो रत्यादि-कारणं विद्यते यस्याः सा विभाविनी भा कान्ति स्तया विभौ व्यापके ऋतौ वसन्ते निशाह्वया द्रुभाः निशैवाह्वा नाम

येषां ते इभा हस्तिनः मदजनकत्वात् रात्रिरूपा हस्तिन इति रूपकम्। बभुः शुशुभिरे च पुनस्तेषु रात्रिलक्षण-गजेषु सत्पतेश्चन्द्रस्य कलाः रदा दन्ताः बभुः। कीदृशाः रदाः? अदारदारदाः। अदाराः जायारहिता स्तेषां दारदाः दारं हृदयविदारणं ददतीति ते। यद्वा। किम्भूते क्षतौ? विभौ विशेषेण शोभमाने। किम्भूता इभाः? विभाः विशेषेण शोभमानाः। किम्भूता रदाः? विभाः विशेषेण शोभमानाः ॥८॥

इह ललनाशोकालिप्रदेन येनात्ममदविनाशोकालि।
कामेनाशोकालिस्वनहूङ्कृतिभिः स दिक्ष्वनाशो-
कालि ॥

इह ललनाशोकालिप्रदेन येन आत्ममदविनाशः अकालि।
कामेन अशोकालिस्वनहुंकृतिभिः सः दिक्षु अनाशः अकालि ॥९॥

इहेति। इह वसन्ते। ललनाशोकालिप्रदेन येन ललना स्त्री तस्याः शोकस्यालयः पंक्तयस्ताः प्रददाति कामिनीविरहं विस्तारयता येन पुरुषेणात्ममदविनाशः आत्मनो यो मदः कामोत्सवस्तस्य विनाशः अकालि अकारि। स पुरुषः दिक्षु दिशासु अशोकालिस्वनहुंकृतिभि-रशोकवृक्षसम्बन्धिनो ये अलयो भ्रमरास्तेषां स्वनाः शब्दास्तएव हुंकृतयस्तर्ज्जनावाचस्ताभिः करणेन कामेन अनाशः आशा वाञ्छा तया रहितोपि अकालि अबन्धि।

जितेन्द्रियोपि वसन्ते भ्रमरशब्दादिना बद्धो भवतीति भावः। अथवा न विद्यते नाशो यस्य स मृत्युञ्जयतुल्योपि कामेन अबन्धि इत्यर्थः ॥९॥

स्मरस्य युद्धरङ्गतां रसा रसा रसा रसा।
जिता वियोगिनः समुन्नते नते नते नते ॥

स्मरस्य युद्धरङ्गतां रसा आर सारसारसा ।
जिताः वियोगिनः समुन्नतेनतेन तेन ते ॥१०॥

स्मरस्येति । सारसारसा साराः श्रेष्ठाः सारसाः पक्षिणो यस्यां सा रसा पृथ्वी स्मरस्य युद्धरङ्गतां समरभूमिभावम् आर प्राप। समुन्नतेन तेन सम्यक् प्रकारेणोन्नता उत्कृष्टा इनता प्रभुता यस्य स तेन। तेन कामेन ते पुरुषा जिताः स्ववशीकृताः। ते के ? ये वियोगिनः सस्त्रीकाः स्त्रीरहिता वा । स्मरतापपराजिताः सन्तः स्त्रीभिः सहासक्ता बभूवुरिति भावः। यद्वा कीदृशी रसा ? सारसारसा आरस्यत इत्यारसः शब्दः सारसानां यः शब्द स्तद्विशिष्टा ॥ १०॥

नुन्नमना मधुना ना श्रयति स्मृतिङ्कोविनाङ्गनामधुना ना। इति ललना मधु नानाविधमधयत्किल तदर्थनामधुनाना ॥

नुन्नमना मधुना न आश्रयति स्मृतिं कः विना अङ्गनां अधुना ना ।
इति ललना मधु नानाविधं अधयत् किल तदर्थनां अधुनाना ॥११॥

नुन्नेति । अधुना वसन्तसमये । मधुना वसन्तेन नुन्नं प्रेरितं मनश्चित्तं यस्य स कः ? ना पुरुषो योऽङ्गनां रमणीं विना रतिं रन्तुं न आश्रयति न प्राप्नोति । अपि तु सर्वोऽपि रतिम् आश्रयत्येव । किल सत्ये इति हेतो ललना स्त्री नानाविधं नानाप्रकारं मधु मद्यम् अधयत् अपिवत् । कीदृशी ललना ? तदर्थनां तस्य नायकस्यार्थना याञ्चा ताम् अधुनाना अनिराकुर्वाणा अङ्गीकुर्वाणेत्यर्थः । रतिसमये पुरुषः अस्माकं वश्यतामेष्यतीत्यानन्देन मधु अपाययदिति भावः । यद्वा तन्मरणशङ्कया मधु अधरास्रुतम् अपाययदिति भावः ॥११॥

पिको पिको पिको पिको वियोगिनीरभर्त्सयत् ।
वचांसि भङ्गमालपन्निता निता निता नि ताः ॥

पिकः अपि कोपि कोपिकः वियोगिनीः अभर्त्सयत् ।
वचांसि भङ्गं आलपन् इतानि तानितानि ताः ॥१२॥

पिकेति । कोपिकः कोपो ऽस्यास्तीति कोपी कोप्येव कोपिकः सकोप इत्यर्थः । यद्वा कोपयतीति कोपिकस्तासामेव कोपकर्त्तेति यावत् । अपि सम्भावनायाम् एतादृशः कोपि पिकः कोकिलस्ता वियोगिनीरभर्त्सयत् भर्त्सितवान् । भर्त्सनं त्वपकारगीरित्यमरः । किं कुर्वन् ? भङ्गं रचनाविशेषम् । इतानि प्राप्तानि तानि तानि वचांसि वसन्तकालीनानि आलपन् कुर्वन् ॥१२॥

श्रीरापि कलापेन प्रवृद्धमाम्रावलिषु पिकलापेन ।
न कलापिकलापेन प्रणर्त्तनमकारि वागपिकलापेन ॥

श्रीः आपि कलापेन प्रवृद्धं आम्रावलिषु पिकलापेन ।
न कलापिकलापेन प्रणर्त्तनं अकारि वाग् अपि कला आपे न ॥१३॥

श्रीरापीति । कलापेन कलाः पातीति कलापश्चन्द्रस्तेन श्रीः शोभा आपि प्राप्ता । पिकलापेन पिकानां लापः संलापस्तेन आम्रावलिषु आम्रवृक्षपंक्तिषु प्रवृद्धम् अतिवृद्धिं प्राप्तम् । कलापिकलापेन कलापा बर्हा एषां सन्तीति कलापिनो मयूरास्तेषां कलापेन यूथेन प्रणर्त्तनं प्रकृष्टं नृत्यं नाकारीति न किन्तु कृतमेवेत्यर्थः । पुनः कला परिष्फुटा वागप्यापि प्राप्ता ॥ १३ ॥

सहकारवृते समये सहकारहणस्य के न सस्मार
पदम् । सहकारसुपरिकान्तैः सहकारमणी पुरः
सकलवर्णमपि ॥

सहकारवृते समये सहकाः रहणस्य के न सस्मार पदम् ।
सहकारम् उपरि कान्तैः सह का रमणी पुरः सकलवर्णम् अपि ॥१४॥

सहकारेति । सहकारवृते सहकार आम्रवृक्षस्तत् पुष्पमपि सहकारं तेन वृते समये वसन्ते के पुरुषाः रहणस्य स्त्रीविरहजन्यदुःखस्य सहकाः सहनक्षमाः न केपीत्यर्थः । का रमणी स्त्री कान्तैः सह भर्तृभिः सह

उपरि अन्ते सहकारं हकारवर्णसहितं पुर आदौ सकलवर्णमपि कश्च लश्च कलौ वर्णौ ताभ्यां सहितं पदं वाक्यं कलहमिति यावत्। न सस्मार न स्मृतवती तथा च सद्यैव कलहं विस्मृत्य कान्तसङ्गमं चकारेति भावः॥ १४॥

अधिगतकामधुरागा द्रुगमेत्य भ्रमरपटलिका
मधुरागात्। पीत्वोत्कामधुरागाद्द्रुतमकृततत:
श्रियोधिकामधुरागात्॥

अधिगतकामधुरा अगात् अगं एत्य भ्रमरपटलिका मधुरागात्।
पीत्वा उत्का मधुरागात् द्रुतं अकृत ततः श्रियः अधिकाः मधुः आगात्॥१५॥

अधीति। रागात् प्रीतेः मधु पुष्परसं पीत्वा द्रुतं शीघ्रम् उत्कण्ठिता सती अधिगतकामधुरा अधिगता प्राप्ता कामस्य धूर्भारो यया सा त्वयैतत् कर्त्तव्यमिति स्वीकृतमन्मथाज्ञा समुदायेति यावत्। एवम्भूता भ्रमरपटलिका मधुपश्रेणिरागात् वृक्षात् अगं वृक्षमेत्य प्राप्य मधुराः गाः वाणीरकृत अकरोत्। ततः भ्रमरमधुरगुञ्जितात् मधुर्वसन्तोऽधिकाः श्रियः शोभा आगात् प्राप॥ १५॥

नसमा नसमा नसमा नसमा गममापसमीच्य
वसन्तनभः। भ्रमद भ्रमद भ्रमद भ्रमद भ्रमरच्छलनः खलु कामिजनः॥

न सः मानसमानसमानसमागमम् आप समीच्य वसन्तनभः।
भ्रमदभ्रम् अदभ्रमदभ्रमदभ्रमरच्छलतः खलु कामिजनः॥१६॥

नसमानेति। खलु निश्चये कामिजनः कामुकसमूहः समानसमानसमानसमागमं न आप। मानसे मानो मानस मान स्तेन सह वर्त्तमानः समानसमानः समानसमानश्चासौ समानः बन्धुश्च मनोवर्त्तिमानसहितबन्धुरिति यावत्। तस्य समागमं न प्रापेति काकुः प्रापैवेत्यर्थः। यदा स कामिजनः मानसे चित्ते यो मानः तेन समानस्तुल्यो यः समागमः तं खलु निश्चितं न प्राप किन्तु वसन्तोद्दीपितः सन् अकालसमागमं प्रापेत्यर्थः। किं कृत्वा? वसन्तनभः वसन्तसम्बन्धिनभ आकाशं समीक्ष्य दृष्ट्वा। कीदृशं नभः? अदभ्रमदभ्रमदभ्रमरच्छलतः भ्रमदभ्रम्। अदभ्रं बहुलं मदो येषां ते अदभ्रमदाः। मेघमालात्वेन स्वस्मिन् भ्रमं ददतीति भ्रमदाः। अदभ्रमदाश्च ते भ्रमदाश्च ते भ्रमराश्च तेषां छलतो व्याजात्। भ्रमन्त्यभ्राणि मेघा यत्र तत्। अभ्रम्मेघोवारिवाहः। अदभ्रबहुलम्बहुः इत्यमरः॥१६॥

गतमत्रचयेनगृहा दसमुत्तरता न्तरतान्तरतान्तरताम्। परएव विकार इयाय वृहत्तमसन्तमस न्तमसन्तमसन्॥

गतम् अत्र च येन गृहात् असमुत्तरता अन्तरतान्तरतान्तरताम्।
पर एव विकारः इयाय वृहत्तमसन्तमसं तं असन्तं असन्॥ १७॥

गतमिति। अत्र वसन्तसमये च पुनर्येन पुरुषेण गृहाद्गतं निर्गतं परः शत्रुः विकारो धातुविकार एव तम्

दूयाय प्राप । कीदृशेन ? अन्तः अतान्तरतान्तरताम् असमन्तरता अन्तः हृदि अतान्तं अविस्तीर्णं यद्दूरतान्तरं सुरतान्तरं तस्य भावस्तत्ता ताम् असमुत्तरता अप्राप्तवता । यद्वा अन्तः हृदि अतान्तम् असमाप्तं रतं यस्याः सा अतान्तरता अन्तर्मनसा अतति स्वामिनं गच्छति सततं ध्यायतीति यावत् सा अन्तरता । अतान्तरता चासौ अन्तरता चेति सा ताम् असमुत्तरता उल्लङ्घयता त्यक्तवता तृत्नवनतरणयोरिति । किम्भूतं पुरुषम् ? दृढत्तमसन्तमसं दृढत्तमम् अधिकं सन्तमसम् अज्ञानं यस्य तम् । एवम् असन्तमविवेकिनम् । कीदृशः विकारः ? असन् अपरिहार्योऽसाधुर्वा ॥ १७ ॥

क्रुधिकान्तवशन्नवदामसमापनयापनया पनयापनया । तमृतेऽनुशयेनचतामशनैरवता रवता रवता रवता ॥

क्रुधि कान्तवशं नवदामसमापनयापनया आप न या अपनया ।
तं ऋते अनुशयेन च ताम् अशनैः अवतारवता आर वत अरवता ॥१८॥

क्रुधीति । या स्त्री क्रुधि क्रोधे सति नवदामसमापनयापनया । नवस्य तद्दाम च नवदाम नवीना माला तस्याः समापनं समाप्तिस्तया या यापना कालातिक्रमस्तेन करणेन कान्तवशं नायकसमीपं न आप न प्राप । यापनं कालविक्षेपे इति हेमः । कीदृशी या ? अपनया अपगतो नयो नीतिर्यस्याः सा । अरवता मूकत्वम् अनुशयेन पश्चात्तापेन

सह अयनैः शीघ्रं तत्कान्तम् ऋते विना तां नायिकाम् आर प्राप। कीदृशेनानुशयेन? आसमन्तात् अवतारवता अवतारोऽस्यास्तीत्यवतारवान् तेन तदानीमुत्पन्नेन। बत खेदे॥ १८॥

नभसोविवरं कुसुमेक्षणभागतरो गतरो गतरो गतरो। वदकान्तमवेक्ष्ययथाद्यमधावरमे वरमे वरमे वरमे॥

नभसः विवरं कुसुमेक्षणभाग् अतरः गतरोगतरः अगतरो।
वद कान्तम् अवेक्ष्य यथा अद्य मधौ अरं एव रमा एव रमे वर मे ॥१६॥

नभस इति। हे वर श्रेष्ठ अगतरो हे पर्व्वतसम्बन्धिवृक्ष त्वं नभस आकाशस्य विवरमन्तरम् अतरः तीर्णवानसि अत्युच्चोसीत्यर्थः। कीदृशस्त्वम्? कुसुमेक्षणभाक् कुसुमान्येवेक्षणानि नेत्राणि तद्भाक् तद्युक्तः। एवं गतरोगतरः अतिशयितो रोगो रोगतरः गतो रोगतरो यस्य यस्माद्वा स दुःसहरोगरहित इत्यर्थः। अतो मे कान्तमवेक्ष्य दृष्ट्वा तथा वद कथय यथा अद्य मधौ वसन्ते अरमेव शीघ्रमेव रमेव लक्ष्मीरिवारमे क्रीड़ां करोमि। लघुक्षिप्रमरं द्रुतम्। क्षीराब्धितनयारमेत्यमरः॥ १६॥

श्रितेतिगामनागतस्वबन्धुकामनागतः।
परापनामनागतस्ततामकामनागतः॥

श्रिता इति गाम् अनागतस्वबन्धुका मनाक् अतः।
परा आप नाम न अगतः तताम कामनागतः ॥२०॥

श्रितेति । परा उत्कृष्टा नायिका इत्यानेन प्रकारेण श्रिता आश्रितार्थात् दृच्चमेव । अतः अगत एतस्मात् दृच्चात् मनाक् ईषदपि गां प्रत्युत्तरवचनं न आप न प्राप । कीदृशी ? अनागतस्वबन्धुका न आगतः स्वकीयो बन्धुर्भर्त्ता यस्याः सा । नाम निश्चये कामनागतः काम एव नागः कृष्णसर्पस्तस्मात् तताम ताम्यतिस्म । अनेन प्रलापोन्माद-व्याधय इति तिस्रो दशाः सूचिताः ॥ २० ॥

कालनादिवसन्तं कुसुमशरमसोढहृद्यनादिवस-न्तम् । अलिभिरनादिवसन्तं दृष्ट्वायत्रात्मनोऽर्थ-नादिवसन्तम् ॥

का ललना दिवसं तं कुसुमशरम् असोढ हृदि अनादि वसन्तम् ।
अलिभिः अनादि वसन्तं दृष्ट्वा यत्र आत्मनः अर्थनात् इव सन्तम् ॥२१॥

केति । का ललना कामिनी तं दिवसं तस्मिन् दिवसे वसन्तऋतौ कुसुमशरमसोढ़ सहितवती न कापीत्यर्थः । दिवसमिति कालाध्वनोरत्यन्तसंयोगेति द्वितीया । किम्भूतं कुसुमशरम् ? हृदि मानसे अनादि सर्व्वदा वसन्तं स्थिति-मन्तम् । यत्र दिवसे सन्तं वर्त्तमानम् वसन्तं ऋतुं दृष्ट्वा अलिभि भ्रमरै रनादि नादोऽकारीत्यर्थः । उत्प्रेक्षते आत्मनो ऽर्थनादिव आत्मीयसुरतप्रार्थनादिव । तया च कीटा अपि सुरतं प्रार्थयन्ति किमुत मानुषीति भावः ॥२१॥

स्वयमथ मन्दारितया युक्तोयक्तन्नलः स मन्दारि-
तया । आराममन्दारितया मदनेन धियाप दुत्त-
मन्दारि तया ॥

स्वयम् अथ मन्दारितया युक्तः युक्तं नलः सः मन्दारितया ।
आरामं दारितया मदनेन धिया आपत् उत्तमं दारितया ॥२२॥

स्वयमिति । अथानन्तरं स नलः स्वयं मन्दारितया युक्तं मन्दारा अस्य सन्तीति मन्दारी मन्दारिणो भावो मन्दारिता तया युक्तं सहितं मन्दारवृक्षसमूहसहितम् । उत्तमं श्रेष्ठमाराममुपवनमापत् प्राप । कीदृशो नलः ? मन्दारितया युक्तः । मन्दा अरयोऽस्य सन्त्यसौ मन्दारी तस्य भावस्तत्ता तया सहितः कर्त्तव्यविचारानभिज्ञशत्रु-त्वसहितः । यद्वा मन्दश्चासौ अरिश्चेति मन्दारिः तस्य भावः मन्दारिता तया हेतौ तृतीया शत्रुभावेन कामेन खण्डितधिया युक्त इत्यर्थः । एवं मदनेन स्मरेण दारितया खण्डितया बुद्ध्या युक्तः । एवं दारितया युक्तः दाराः अस्य सन्तीति दारी दारिणो भावो दारिता तया सहितः स्त्रीमत्तया संयुक्तः ॥ २२ ॥

अनुव्रता समाननं समाननन्द भीमजा ।
तमिन्दुना समाननं समाननन्दने वने ॥

अनुव्रता समाननं समा ननन्द भीमजा ।
तं इन्दुना समाननं समाननन्दने वने ॥२३॥

अनुव्रतेति । समाननं माननया पूजया तया सहितं पूज्यमित्यर्थः । इन्दुना समाननं चन्द्रसदृशमुखं तं नलम् अनुव्रता अनुगता अनुवद्धा वा । समा सलक्ष्मी का ? भीमजा दमयन्ती । समाननन्दने समानं सदृशं नन्दनम् इन्द्रवनं यस्य तस्मिन् वने ननन्द आनन्दं प्राप्तवती । समाननन्देति वा क्रियापदम् ॥ २३ ॥

इह रुचिरामावलयस्वदृशमितिपृथक् प्रियस्य रामावलयः। प्राप्तारामावलयस्फुरो गिरा यदुदरेभिरामावलयः ॥

इह रुचिरां आवलयस्व दृशं इति पृथक् प्रियस्य रामावलयः ।
प्राप्तारामा वलयस्फुरः गिरा यदुदरे अभिरामाः वलयः ॥ २४ ॥

इहेति । हे सुन्दरि इह वने रुचिरां मनोज्ञां दृशं चक्षुरावलयस्व आवर्त्तय इत्यनेन प्रकारेण प्रियस्य भर्त्तुर्गिरा वचनेन ताः रामावलयः स्त्रीश्रेणयः । पृथक् एकैकशः प्राप्तारामा आरामगता अभूवन् अरण्यं जग्मुरित्यर्थः । कीदृश्यः ? वलयैः कटकैः स्फुरन्तीति क्विप् वलयस्फुरः । कटकं वलयोऽस्त्रियामित्यमरः । अथ वा प्रियस्य वचनेन स्फुरस्तुष्टा बभूवुः कथम्भूताः ? प्राप्तारामावलयः प्राप्ता आरामाणां आवलयो याभिस्ता इत्यर्थः । ताः काः ? यदुदरे यासामुदरे ऽभिरामाः सुन्दरा वलयस्त्रिवलीभङ्गा इत्यर्थः । करोपहारयोः पुंसि वलिः प्राण्यङ्गजे स्त्रियामित्यमरः ॥ २४ ॥

नवकुसुमानमनागा गन्तुं नैच्छत्परा समान
मनागाः । अजनि पुमानमनागा श्रित्यसमत्
कुसुमदानमानमनागाः ॥

नवकुसुमानमनागाः गन्तुं नैच्छत् परा समानमना गाः ।
अजनि पुमान् अमनाक् आश्रित्य सः सत्कुसुमदानमानं अनागाः ॥२५॥

नवेति । नवकुसुमानमनागाः नवैः कुसुमैरानमन्तीति नवकुसुमानमनास्तादृश्या अगा वृक्षा यासु ता गाः वनभुवः गन्तुं यातुं पराऽन्या स्त्री नैच्छन्नायासीदिति । कीदृशी ? समानमनाः समानं मानसहितं मनो यस्याः सा कृतमानेत्यर्थः । स पुमान् सापराधः पुरुषः । अमनाक् अनल्पम् । सत्कुसुमदानमानं सुकुसुमानां दानमेव मानः सम्मानना नामाश्रित्य अनागा निरपराधो ऽजनि जातः । स पुष्पवनं गन्तुमनिच्छन्त्या मानिन्याः स्वावचितसत्पुष्पदानेन मानमपाचकार सत्कुसुमदामदानमिति पाठे पुष्पमालादानमाश्रित्येत्यर्थः ॥२५॥

रुषितं सखिसादमसुष्यलसत्तनुते तनुते तनुते
तनुते । ननवाननवाननवाननवागिहतेचरणे मृतिमेष्यति सः ॥

रुषितं सखि सादं असुष्य लसत्तनुतेतनुते तनु ते तनुते ।
न न वाननवाननवान् अनवाक् इह ते चरणे मृतिम् एष्यति सः ॥२६॥

रुषितमिति । नायकप्रेरितदूतीवाक्यम् । हे सखि लसत्तनुतेतनुते लसन्ती तनु र्यस्या असौ लसत्तनुस्तद्भाव-

लब्धा तया इता प्राप्ता नुतिस्तुति र्यया सा तत् संबुद्धिः कमनीयशरीरतालब्धस्तुते । ते तव तनु स्वल्पमपि रुषितं रोषो ऽमुष्य तव प्रियस्य सादमवसन्नतां तनुते विस्तारयति । त्वयि रुष्टायाम् अस्य बहुदुःखं जायत इति भावः । स तव कान्तः इहास्मिन् वसन्ते ते चरणे त्वत्पदे ऽनवाक् अवाक् अधोमुखः न अवाक् अनवाक् अभिमुखः अथ वा अवाक् मूकः अनवाक् स्तुतिवाक्यसहितः सन्नित्यर्थः । कथम्भूतः ? वाननवाननवान् वानं शुष्कं नवं यौवनोदयसुन्दरमाननं मुखं यस्य स तादृशः । स प्रियः रुतिं न एष्यति इति नापि तु मरिष्यत्येव । त्वच्चरणपतितस्यास्य प्राणास्तिष्ठन्ति नोचेत् मदनव्यथया शुष्कमुखस्य मरणमेवेति भावः । रुतिमित्यत्र नतिमिति पाठे नतिं प्रणामं एष्यतीत्यर्थः । स्तवः स्तोत्रं नुतिस्तुतिरित्यमरः । वानशुष्के गतौ गन्ध इति वैजयन्ती । पराङ्मुखः पराचीनः स्यादवाङप्यधोमुख इत्यमरः । इण्गतावित्यस्य लृटि एष्यतीति ॥२६॥

अपि चैत्यनगानवता नवता नवता तवतास्तत
रामधुना । इह सौख्यमगोचरमा चरमाचरमा
चरमास्यनरम्यतरा ॥

अपि च एत्य नगान् अवतानवता नवता न वत अस्ततरा मधुना ।
इह सौख्यं अगोचरं आचर मा च रमा चरमा अस्य न रम्यतरा ॥२७॥

अपीति । पुनस्तामेवाह । हे सखि अवतानवता

अवतानो विस्तारो ऽस्यास्तीत्यवतानवान् तेन मधुना वसन्तेन नवता नवीनता न अस्ततरा ऽतिशयेन त्यज्या । वताश्चर्य्ये किन्तु वसन्तो नूतनतां त्यजिष्यत्येवेति भावः । किं कृत्वा ? नगात् वृक्षानेत्य प्राप्य । इह प्रौढ़वसन्ते ऽगोचरं वक्तुमशक्यं सौख्यम् आचर लभस्व अस्य वसन्तस्य चरमा पश्चिमा रमा लक्ष्मीश्च पुनः सा शोभा रम्यतरा सुन्दरी न भवति । वसन्तमध्ये भर्त्रा सह रत्यादिकं सुखमनुभूयतां पश्चात्तनी शोभा तु न भव्येति भावः । तुन्नतुन्नास्तनिष्ठता विद्धच्छिप्रेरिताः समाः । नवीनो नूतनो नवः । आचरेति चरगतिभक्षणयोरित्यस्य लोटि ॥२७॥

इतिलालिकयालिकयातकचरतिकालिकयालिकया-
कथिता । दयितं समयासमयादपराव्यहरत्समया
समया च तया ॥

इति लालिकया अलिकयातकचैः अतिकालिकया आलिकया कथिता ।
दयितं समया समयात् अपरा व्यहरत् सः मया समया च तया ॥२८॥

इतीति । इत्यनेन प्रकारेण लालिकया लालयन्त्या आलिकया सख्या कथिता उक्ता अपरा स्त्री दयितं समया भर्त्तुः समीपं समयात् अगात् । दयितमिति समयायोगे समया अभित इत्यादिना द्वितीया । समयान्तिकमध्ययोरित्यव्ययवर्गे मेदिनी । समयादिति यातेर्लङि । च पुनः स कामुकः मया लक्ष्म्या समया तुल्यया तया स्त्रिया सह

व्यहरत् विचिक्रीड़ । कीदृश्या ? अलिकयातकचैरलिके याता प्राप्ता ये कचाश्चूर्णकुन्तलास्तैरतिकालिकया श्यामलया सख्या वा विशेषणम् । ललाटमलिकं गोधिः । कचः केशः शिरोरुह इत्यमरः ॥२८॥

अतिरुचिमानस्तवकः सरस्तटो यं विचीयमानस्तवकः । इह खलु मानस्तव कः प्रियामिति परोनयत्समानस्तवकः ॥

अतिरुचिमान् अस्तवकः सरस्तटः अयं विचीयमानस्तवकः । इह खलु मानः तव कः प्रियां इति परः अनयत् समानस्तवकः ॥२९॥

अतीति । कश्चिन्मानवतीं मानयन्नाह हे सुन्दरि अयं विचीयमानस्तवको विभिः पक्षिभि र्भ्रमरप्रभृतिभिश्चीयमाना मकरन्दपानायान्विष्यमाणाः स्तवकाः पुष्पगुच्छा यस्मिन् तादृक् । अथवा विचीयमाना अवचीयमानाः सङ्गृह्याः स्तवका यस्मिन् तादृक् । अस्तवकः अस्ता गता वका यस्मात् तादृक् सरस्तटः तड़ागतीरम् । अतिरुचिमान् अतिसुन्दरः । इहास्मिंस्थले तव कः मानः ? खलु निश्चितम् । कः प्रस्तावः इति क्रमेण समानस्तवकः समानः मानसहितः सादर इति यावत् स्तवकः स्तुति र्यस्य स तादृक् कामुकः प्रियं स्त्रियम् अनयत् अनैषीद्रत्यै इति यावत् । पुष्पवासलोभभ्रमद्भ्रमरे वकादिराहित्येन निर्जने मानो ऽनुचित इत्येतादृशान्यस्थलाभावादिह सम्भोगो भवत्विति हस्ते धृत्वा कुञ्जं अविशदिति भावः । अनयदिति नियोलङि ॥२९॥

अरुणतरपरागस्य प्रसवम्प्रैक्षिष्ट न पुनरपरागस्य ।
हसितैरपरागस्य स्वैस्तिष्ठन्त्यपि लवेप्सुरपरागस्य ॥

अरुणतरपरागस्य प्रसवं प्रैक्षिष्ट न पुनः अपरा अगस्य ।
हसितैः अपरागस्य स्वैः तिष्ठन्ती अपि लवेप्सुः अपराक् अस्य ॥३०॥

अरुणेति । अपरान्याङ्गनाऽरुणतरपरागस्य अरुणतराः अतिशयेनारुणाः परागाः कुसुमरजांसि यस्य तादृशस्यास्य अगस्य वृक्षस्य स्वैः स्वकीयैर्हसितैर्हासै रपरागस्य अपगतलौहित्यस्य अपराक् संमुखं लवेप्सुः पुष्पमवचिकीर्षुस्तिष्ठन्त्यपि विद्यमानापि प्रसवं पुष्पं न पुनः प्रैक्षिष्ट नापश्यत् लोहितकुसुमस्य स्वहासेन शुक्लीभूतत्वात् विस्मयो जात इति भावः । लवोऽभिलावो लवने स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने । शैलवृक्षौ नगावगौ इत्यमरः । ईक्षदर्शनांकनयोरित्यस्मात् प्रपूर्वाल्लुङ्याटिसिचीटिरूपम् ॥३०॥

अवेक्ष्य पल्लवालयानगान् श्रितालवालया ।
लतातयेवबालयाबभेऽन्यया ववालया ॥

अवेक्ष्य पल्लवालयान् अगान् श्रितालवालया ।
लतातया एव बालया बभे अन्यया ववाल या ॥ ३१ ॥

अवेक्ष्येति । अन्यया बालया षोड़शवार्षिक्या लततया इव लतात्वेन रूपेणैव बभे शुशुभे अन्या का ? या पल्लवालयान् नवपत्रयुक्तान् अगान् वृक्षान् अवेक्ष्य दृष्ट्वा ववाल उल्ललास अन्यापि लताश्रितालवाला आश्रयभूतान्

दृष्ट्वान् दृष्ट्वा उल्लसत्येवेति भावः । यद्वा ववाल चचालेत्यर्थः यथा लताद्यानधिरोहितुं चलति तथेति भावः बलप्राणने स्खलने वा धातोः रूपं कयम्भूतया श्रितालवालया ? पल्लवानयनार्थं श्रितं आश्रितम् आलवालं यया तयेत्यर्थः ॥ ३१ ॥

व्रततीनामालीनां मध्येन्योव्यचिनुताङ्गनामालीनाम् । अप्येनामालीनां स्मिताच्च जानन् मदाच्च नामालीनाम् ॥

व्रततीनाम् आलीनां मध्ये अन्यः व्यचिनुत अङ्गनां आलीनाम् ।
अपि एनाम् आलीनां स्मितात् च जानन् मदात् च नाम आलीनाम् ॥३२॥

व्रततीति । अन्यः कामी आलीनां सखीनां स्मितात् हासात् । पुनरलीनां भ्रमराणां मदाज् जानन्नपि कलयन्नपि अङ्गनां स्त्रियं व्यचिनुत विलोकयामास । किम्भूतां ? व्रततीनां लतानां मध्ये आलीनां सखीनाञ्च मध्ये आलीनां गुप्तानामसम्भावनायाम् । आदौ सर्वा एव लता इति ज्ञानमासीत् इदानीं काचित् हसति कुत्रचित् भ्रमराः स्वनन्ति इति ज्ञात्वा तत्राङ्गनाम् अन्वेष्टुं गतवतीत्यर्थः ॥३२॥

कमितुः कलुषाच्चिसुखार्थनभागपरागपरा गपरा गपरा । स्थितिमाप तथैव हृतः स पुमानया ननया ननया ननया ॥

कमितुः कलुषाच्चिसुखार्थनभाग् अपराग् अपरा अगपरागपरा ।
स्थितिम् आप तथा एव हृतः स पुमान् अनया आननयाननयो न न या ॥३३॥

कमितुरिति । अगपरागपरा वृक्षमकरन्ददर्शनोन्मुखी अतएव कलुषाच्चित्सुखार्हनभाक् कलुषं परागेण यदक्षि तस्य यत् सुखं परागनिष्काशनात् तस्य यार्ऽहना याञ्चा तां भजतीति तद्भाक् । अपराङ्गना कमितुः कमयतीति कमिता भर्त्ता तस्यापराक् संमुखं स्थितिं स्थानमाप प्राप । अनया अङ्गनया स पुमान् पतिस्तथैव तेन प्रकारेण भर्त्तु-रभिमुखस्थितित्वेन न हृत इति न किन्तु वशीकृतः । अनया कया ? आननयाननया आननं तस्य यानं भर्तृमुख-समीपप्रापणं तत्र नयो वैदग्ध्यं यस्याः सा । नयनपतित-मकरन्दं दूरीकुर्विति नायकाभिमुखं मुखं प्रसारयन्तीं तं जहारेति भावः ॥ ३३ ॥

स्वमनेनसमायतया व्यधितागःस्वेव कश्चन समा-यतया । ऋजुमानसमायतया तस्मै नाक्रोधि जीवन-समाय तया ॥

स्व अनेनसं आयतया व्यधित आगःसु एव कश्चन समायतया ।
ऋजुमानसं आयतया तस्मै न अक्रोधि जीवनसमाय तया ॥ ३४ ॥

स्वमिति । कश्चन कामी तस्याः स्वभार्य्याया अग्रे आयतया अतिदीर्घया समायतया मायया कपटेन सह वर्त्त-मानः समायस्तस्य भावः । समायता तया सकपटत्वेन आगःसु एव अपराधेषु सत्स्वपि स्वमात्मानम् अनेन समपराधरहितं व्यधित चक्रे । ऋजुमानसं कोमलचित्तम् आयतया प्राप्त-

तया अर्थात् कामिन्या जीवनसमाय प्राणतुल्याय । तस्मै भर्त्रे नाक्रोधि न कुपितम् ॥३४॥

अभवदनेनाना विस्मयदोऽन्योमानिनीजनेनानावि ।
अतिसुजनेनानाविस्खलनं यदुपवनमनेनानावि ॥

अभवत् अनेनाः ना विस्मयदः अन्यः मानिनीजने नानावि ।
अतिसुजनेन अनाविस्खलनं यदु उपवनं अनेन अनावि ॥ ३५ ॥

अभवदिति । मानिनीजने विस्मयदो ऽद्भुतदो ऽन्यो ऽपरो ना पुरुषः ततः तस्माद्धेतोरनेना अनपराधो ऽभवत् अभूत् । यद्यस्मादनेनातिसुजनेनापि सुहृज्जनेन पुंसा नानावि नानाविधा वयः पक्षिणो यस्मिंस्तादृशम् उपवनमारामो ऽनाविस्खलनं वर्णनावैपरीत्यमपशब्दादि वा तद्रहितं यथा स्यात् तथा ऽनावि स्तुतम् । कृतापराधः कश्चित् पुमान् उद्यानवर्णनयैव तां प्रासीदयदिति भावः । अनावीति णुस्तुतावित्यस्य चिणि लुङ्रूपम् ॥३५॥

जनादसोः समानतः पदाहतिं समानतः ।
परोदधौ समानतः स्वमूर्ध्नि भासमानतः ॥

जनात् असोः समानतः पदाहतिं समानतः ।
परः दधौ समानतः स्वमूर्ध्नि भासमानतः ॥ ३६ ॥

जनादिति । परोऽन्यः कामुकः असोः समानतः असुः प्राणः तस्य समानतः सादृश्यात् प्राणतुल्यात् समानतः

साहङ्कारात् । भासमानतः शोभमानात् जनात् कान्ताजनात् पदाहतिं चरणेन आहतिम् आघातं समानतोऽतिनम्रः सन् स्वमूर्द्धि दधौ स्वशिरसि प्रसादमिव दधारेत्यर्थः ॥३६॥

तनुच्छटोत्तमालया तया भुवोत्तमालया ।
अहारि शीतमालया निलावधूतमालया ॥

तनुच्छटा उत्तमालया तया भुवा उत्तमालया ।
अहारि शीतमालयानिलावधूतमालया ॥ ३७ ॥

तनुच्छटेति । तया उद्यानभुवा उत्तमालया उन्नता उच्छ्रिताः तमालवृक्षा यस्यां सा तादृश्या । पुनः शीतमालयानिलावधूतमालया शीतो यो मालयोऽनिलो मलयगिरिसम्भवो वायुः तेनावधूता कम्पिता माला वृक्षश्रेणी यस्यां तादृश्या भुवा उत्तमालया उत्तम आलयो गृहं यस्याः सा तादृशी । तनुच्छटा स्त्रीसमूहोऽहारि हृता तया च मन्दसुगन्धिशीतलवायुसम्बन्धेन मनोहरे उद्याने कान्तसहिता सर्वाविलासिन्य उत्तमगृहं त्यक्त्वा रमणार्थं ययुरिति भावः । वेल्लितप्रेंखिताधूतचलिताकम्पिताधुते इत्यमरः । छटाकान्तौ संहतौ चेति धरणिरिति भरतः॥३७॥

श्रितलसदारामाभिः प्राप्येति जनोविहृतिमुदारा-
माभिः । आरादारामाभिस्फुरितसरोजं सर-
स्तदा रामाभिः ॥

श्रितलसदारामाभिः प्राप्य इति जनः विहृतिं उदाराम् आभिः ।
आरात् आर अमा अभिस्फुरितसरोजं सरः तदा रामाभिः ॥ ३८ ॥

श्रितेति । जनः कामुकः श्रितलसदारामाभिः श्रित आश्रितो लसन् देदीप्यमान आरामो याभिस्ताहृशीभिः आभिरमूभीः रामाभिः स्त्रीभिः अमा सह उदारां श्रेष्ठां विहृतिं विहारं इत्यनेन प्रकारेण प्राप्य तदा तदानीं आरात् समीपे ऽभिस्फुरितसरोजम् अभि सर्व्वतः स्फुरितानि फुल्लानि सरोजानि पद्मानि यस्मिन् ताहृशं सरस्तड़ागम् आर प्राप्तवान् । अमा सह समीपे च । कासारः सरसी-सर इत्यमरः ॥३८॥

किमपः सरसीमाया धाम गुणाम्तप्रसरसीमायाः ।
द्रुतमिति सरसी मायात्यक्तो भैम्या नलश्च सरसी-
मायात् ॥

किं अपः सरसि इमाः या धाम गुणाम्तप्रसरसीमायाः ।
द्रुतं इति सः रसी मायात्यक्तः भैम्या नलः च सरसीं आयात् ॥ ३९ ॥

किमपइति । हे दमयन्ति त्वमिमा अपः जलानि किं गच्छसि ? विहर्त्तुमिति शेषः । या त्वं गुणाम्तप्रस-

रसीमायाधामगुणा एवामृतं तस्य प्रसरो विसर्पणं प्रवाह आधिक्यं वा तस्य या सीमा मर्य्यादा तस्या धाम गृहम् । अत अमृतशब्देन सुधाजलं चाभिधीयते गुणामृतप्रवाहः त्वय्येव स्थित इति भावः । इत्येवमुक्त्वा स नलो रसी रसिकः मायात्यक्तो व्याजहीनो ऽदम्भी भैम्या सह द्रुतं शीघ्रं सरसीं सरो ऽगात् अगमत् विहर्त्तुमिति शेषः । आपः स्त्रीभूम्नि वार्वारि । त्यक्तं हीनं विधुतं समुज्झितं धूतमुत्सृष्टमित्यमरः । आगादिति यातेर्लङि ॥३९॥

गतपङ्काः सारस्य श्रियोऽस्य जह्रुर्मनोधिकाः सारस्यः ।
अपि कोकाः सारस्य स्थिताः कुरर्य्यश्च हंसिकाः सारस्यः ॥

गतपङ्काः सारस्य श्रियः अस्य जह्रुः मनः अधिकाः सारस्यः ।
अपि कोकाः सारस्य स्थिताः कुरर्य्यः च हंसिकाः सारस्यः ॥ ४० ॥

गतेति । सारस्यः सरस इमाः सारस्यः सिरःसम्बन्धिन्यः श्रियः शोभाः कथम्भूताः ? गतः च्युतः पङ्को याभ्यस्ताः स्ताद्दृश्यः निर्मलाः अधिकाः श्रेष्ठाः यद्वा कानि जलानि अधिकृत्य वर्त्तन्ते ताः सारस्य सातस्य श्रेष्ठस्यास्य नलस्य मनो हृदयं जह्रुर्हृतवत्यः । सारस्यत ाः सारस्यस्यत इत्यारसः शब्दस्तस्य भाव आरस्यं आरस्येन सहितं सारस्यं तत्र स्थिताः कृतमधुरध्वनयः । अथ वा सरसस्य भावः सारस्यं तत्र स्थिता विख्याताः । सारस्याज्जलसाहित्यात् वा स्थिताः । कोकाश्चक्रवाकाः कुरर्य्यः कुरर-

पक्षिस्त्रियः । हंसिका हंसस्त्रियः सारस्यः सारसानां स्त्रियोऽपि मनो जह्रुः । सरःसम्बन्धिशोभादर्शनेन कोकादिदर्शनेन च मुमुद इति तात्पर्य्यम् । पङ्कोऽस्त्री शादकर्द्दमौ । सारो बले स्थिरांशे च । कोकश्चक्रश्चक्रवाक-इत्यमरः । जह्रुरिति ह्रञोलिटि ॥ ४० ॥

काच्चतिरस्तिमिताभिः स्फुटमद्भिर्विहृतिरस्तिमिताभिः । अनतितरस्तिमिताभिः कमेत्ययदशङ्किधृतिभिरस्तिमिताभिः ॥

का क्षतिः अस्ति मिताभिः स्फुटं अद्भिः विहृतिः अस्तिमिताभिः ।
अनतितरस्तिमि ताभिः कं एत्य यत् अशङ्कि धृतिभिः अस्तिमिताभिः ॥४१॥

काच्चतीति । अनतितरस्तिमि अत्यन्तं तरो बलं रंहो वा येषां ते ऽतितरसो न विद्यन्ते अतितरसस्तिमयो मत्स्यविशेषा यस्मिन् तादृशं तिमिनक्रादिरहितं कञ्जलमेत्य प्राप्य धृतिभि र्धैर्यैरस्तिं त्यागमिताभिस्त्यक्तधैर्य्याभिः । यद्वा धैर्यैः अस्तिमिताभिः अस्थगिताभिः चञ्चलाभिरित्यर्थः ताभिः स्त्रीभिः अशङ्कि शङ्कितम् अतर्कीति पाठे विचारितं किमतर्कि तदाह यत् यस्मात् । अस्तिं क्षेपणं इताभिः प्राप्ताभिः तरङ्गक्षिप्ताभिरित्यर्थः मिताभि र्लघुपरिमाणाभिरद्भिः स्फुटं प्रत्यक्षमियं विहृतिः क्रीडा अतः काच्चतिरस्ति न कापीत्यर्थः । तिमिनक्रादिरहिते सरसि तासां भय-

कारणं स्वभावभीरुत्वमेव । राजीवः प्रकुलस्तिमिः । तरसी बलरंहसी । कं शिरोऽम्बुनोरित्यमरः । ग्रकिभये इत्यस्य चिणि लुङि ॥ ४१ ॥

अलिर्मिलत्परागतः सरोरुहात्परागतः ॥
मुखं मुदापरागत स्तदीयमाप रागतः ॥

अलिः मिलत्परागतः सरोरुहात् परागतः ।
मुखं मुदा अपराग_अतः तदीयं आप रागतः ॥ ४२ ॥

अलीति । अलि र्भ्रमरो मिलत्परागतो मिलन् उल्लसन् परागः कुसुमरेणु र्यस्मिन् तादृशादतः अस्मात् सरोरुहात् कमलात् परागतः परावृत्तः अपराक् संमुखं तदीयं स्त्रीगणसम्बन्धिमुखं मुदा हर्षेण रागतो ऽनुरागात् आप प्राप्तवान् । सौरभाधिक्येन कमलं विहाय तन्मुखम् अधिश्रियदिति भावः ॥ ४२ ॥

अथ कामानलिनीनां स्त्रीणां संघैर्मनोरमा नलि-
नीनाम् । विधुरतमा नलिनीनाम्पंक्तिर्विततान
संभ्रमानलिनीनाम् ॥

अथ कामानलिनीनां स्त्रीणां संघैः मनोरमा नलिनीनाम् ।
विधुरतमा नलिनीनां पंक्तिः विततान संभ्रमान् अलिनीनाम् ॥ ४३ ॥

अथेति । अथानन्तरं कामानलिनीनां कन्दर्पानलयुक्तानां कामुकीनां नलिनीनां नलयुक्तानां नलः पतित्वेन अस्या अस्तीति नलशब्दादिनि प्रत्ययः ततोङीप् ।

स्त्रीणां संघैः समूहैः नलिनीनां कमलिनीनां पंक्तिः विधुततमा ऽत्यन्तं कम्पिता स्नानवशात् पद्मावचयाद्द्वा मनोज्ञा सुन्दरी अलिनीनां भ्रमरीणां संभ्रमान् भयध्वनीन् ततान नलसहितारामां दोलिता कमलिनी भङ्गी झङ्कारान् चकारेति भावः ॥४३॥

सरः श्रियोन्तरङ्गतः सरोजनृत्तरङ्गतः।
भयं महत्तरङ्गत स्तनूजनस्तरङ्गतः॥

सरः श्रियः अन्तरं गतः सरोजनृत्तरङ्गतः।
भयं महत्तरं गतः तनूजनः तरङ्गतः ॥ ४४ ॥

सरइति। सरः श्रियः सरो लक्ष्म्या अन्तरं मध्यं स्वरूपत्वं वा गतः प्राप्तः। तनूजनः स्त्रीसमूहः सरोजनृत्तरङ्गतः सरोजानां कमलानां नृत्तं नर्त्तनं तस्य रङ्गतो रङ्गभूमेः। तरङ्गतः ऊर्मेर्महत्तरम् अतिशयेन महद्भयं साध्वसं गतो गतवान्। कमलनर्त्तनहेतुतरङ्गात् नक्रहतिकम्पशङ्कया स्त्रीजनो भीतो बभूवेति भावः। अन्तरम् अवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये। छिद्रात्मीयविनाबहिरवसरमध्येन्तरात्मनि चेति। लास्यं नृत्तं च नर्त्तने इत्यमरः ॥४४॥

अथ नीरात्सारसतः फेनपरीताद्यथाम्बरात्सारसतः। अतिमुखरात्सारसतस्तीरमिताश्चीततिश्चिरात्सारसतः॥

अथ नीरात् सारसतः फेनपरीतात् यथा अम्बरात् सारसतः।
अतिमुखरात् सारसतः तीरं इताः स्त्रीततिः चिरात् सारसतः ॥ ४५ ॥

अथेति। अथ जलविहारानन्तरं सा स्त्रीततिः स्त्रीसमूहश्चिरात् बहुक्षणात् सारसतः सरसः इदं सारसं तादृशात् नीरात् जलात् तड़ागजलात् सारसतः सरसः इदं सारसं क्रीड़नं ततस्तद्विहाय ल्यब्लोपे पञ्चमी। नीरात् कथम्भूतात्? रसतः सारतः अतिमुखरात् रसतः शब्दायमानात् सारसतः सारसपक्षिविशेषात् हेतोः अतिमुखरात् अतिवाचालात्। फेनपरीतात् फेनव्याप्तात् तीरं तटम् इता प्राप्ता। उत्प्रेक्षेत अम्बरात् आकाशात् यथा अम्बरादिवेत्यर्थः। इवार्थे यथा। आकाशपक्षे सारसतः साराणि श्रेष्ठानि सन्ति नक्षत्राणि यस्मिन् तादृशात्। फेनपरीतं जलं नक्षत्रवदाकाशप्रायं यथा गगणतलादप्सरसोऽवतरन्ति एवं जलात् स्त्रियोऽवतेरुरिति भावः। सत्ये साधौ विद्यमाने प्रशस्तेभ्यर्हितेपि सत्। व्योमपुष्करमम्बरम्। सारो बले स्थिरांशे च इत्यमरः। रसत इति रसशब्दे इत्यस्मात् शतन्तः॥ ४५॥

स चोदयावलीनतः समुत्प्रभावलीनतः।
नयन्ययावलीनतः पदं जनोवलीनतः॥

स च उदयावलीनतः समुत्प्रभावलीनतः।
नयन् ययौ अलीन् अतः पदं जनः वलीनतः॥ ४६॥

स चोदयेति। स च जनः स्त्रीसमूहः वलीनतस्त्रिवलीभिरानतः नम्रः अलीन् भ्रमरान् नयन् गात्रादिसौगन्ध्येर-

नाकर्षयत् अतः सरस्तीरात् पदं स्वस्थानं ययौ। कथम्भूतं पदम्? उदयावलीनतः उदयाचलप्राप्तात्। यद्वा उदयं प्राप्य अवलीनात् निमग्नात् इनतः सूर्य्यात् समुत्प्रभावलिः सम्यगुन्नताः प्रभावलयः प्रभाश्रेण्यो यस्मिन् तादृशम्। सूर्य्येऽस्तमुपयाति स्त्रीजनो गृहं गतवानित्यर्थः। पदं व्यवसिति-त्राणस्थानलक्ष्मांघ्रिवस्तुष्वित्यमरः॥ ४६॥

दिश कामानंगेहं मन्यो मदनेषुविकृतिमानंगेहं।
इति परमानंगेहंनलः प्रियामनयदतिविमानं गेहं॥

दिश कामान् अङ्ग इहं मन्यः मदनेषुविकृतिमान् अङ्गे अहम्।
इति परमानङ्गेहं नलः प्रियां अनयत् अतिविमानं गेहं॥ ४७॥

दिशेति। हे अङ्ग प्रिये दमयन्ति अहम् अङ्गे शरीरे मदनेषुविकृतिमान् कामशरविकारवानस्मि। कथम्भूतः? इहंमन्यः इं कामं हन्तीति इहः इहं कामहन्तारम् आत्मानं मन्यते इहंमन्यः अतः कामानभिलाषान् दिश देहि रत्यभिलाषं पूरय। इत्यनेन प्रकारेण नलः प्रियं गेहं गृहम् अनयत् अनैषीत्। कथम्भूतं गेहं? परमानङ्गेहं परमा उत्कृष्टाऽनङ्गस्य कन्दर्पस्य ईहा चेष्टा वाञ्छा वा यस्मिन् भित्तिलिखितनानाकामचेष्टं कामोद्दीपनं वा। अतिविमानम् अतिक्रान्तं विमानं पुष्पकादि येन तत् तिरस्कृतं देवयानमित्यर्थः। अनयदिति णीञ्प्रापणे ॥ ४७॥

अरुणमहस्तेनेन प्रापि च सोऽब्जैर्गुणग्रहस्तेने न।
भाव्यमिह स्तेनेन स्फुटमस्य हि तद्गतेंऽशुहस्तेनेन॥

अरुणमहस्तेनेन प्रापि च सः अब्जैः गुणग्रहः तेने न।
भाव्यं इह स्तेनेन स्फुटम् अस्य हि तद्गते अंशुहस्ते अनेन ॥ ४८॥

अरुणेति। इनेन रविणा अरुणमहस्ता अरुणतेजस्त्वं प्रापि प्राप्ता सन्ध्यारागारुणो रविरभूत्। स च गुणग्रहो गुणग्रहणम् अब्जैः कमलैः न तेने न विस्तारितः। इह सन्ध्यासमये अस्य हि सूर्य्यस्य तद्गते कमलगते अंशुहस्ते किरणहस्ते सति अनेन रविणा स्तेनेन चौरेण स्फुटं व्यक्तं भाव्यम्। सन्ध्यारागारुणे सूर्य्ये कमलानाम् आरक्त्यं न अभूत्। यतः कमलगते रविकरे सति सायंकाले स्वकरद्वारा तद्रक्ततां रविरपहरिष्यतीति भावः। महश्चोद्भवतेजसोरिति। तेने तनोतेर्लिटि॥ ४८॥

यतो यतो यतो यतो रवेर्मरीचिसञ्चयः।
महान्धकारसञ्चयस्तत स्तत स्तत स्ततः॥

यतः यतोयतो यतो रवेः मरीचिसञ्चयः।
महान्धकारसञ्चयः ततस् ततस्ततस् ततस्॥ ४९॥

यत इति। यतो यस्माद्धेतो रवेर्मरीचिसञ्चयो रविकिरणसमूहः। यतो यतो यस्मात् यस्मात् स्थानात्। यत उपरतः। यमु उपरमे धातोः रूपम्। ततस्तस्माद्धेतोः

ततस्ततः तत्र तत्र महान्धकारसञ्चयो महान्धकारसमूहः ततः व्याप्तः । यतोयतो देशाद् रविकिरणा निवृत्ताः तत्र तत्र महान्धकारो व्यापदिति भावः ॥४९॥

छादितरवितानेन प्रापि च कालेन सस्वरवितानेन।
जितरुधिरवितानेन व्योम्ना च स्फुरितमुडुभिरवि-
तानेन ॥

छादितरविता अनेन प्रापि च कालेन सस्वरवितानेन।
जितरुधिरवितानेन व्योम्ना च स्फुरितं उडुभिः अवितानेन ॥ ५० ॥

छादितेति । अनेन कालेन सायंकालेन छादितरविता आच्छादितः पिहितो रवि र्यस्मिन् सः तस्य भावस्तत्ता सा प्रापि प्राप्ता । कथम्भूतेन ? सस्वरवितानेन सस्वराः सशब्दाः वीनां पक्षिणां ताना विस्तारा यस्मिन् तादृशेन सशब्दपक्षिसमूहविशिष्टेनेत्यर्थः । एवं जितरुधिरवितानेन जितरुधिरसमूहेन अत्यन्तमारक्तेनेत्यर्थः । एवं अवितानेन अवीनां मेषाणां वितानो विस्तारो यस्मिन् तेन । यद्वा न विद्यते वितानो यज्ञो यस्मिन् तेन । सन्ध्यायां सप्त वर्जयेदिति स्मृतेः । पुन र्व्योम्ना आकाशेन उडुभिः करणेन स्फुरितं शोभितम् । यद्वा जितरुचिरवितानेनेति पाठे व्योम्ना इत्यस्य विशेषणं जितः अतिरुचिरो वितान उल्लोचो येन इत्यर्थः । क्रतुविस्तारयोरस्त्री वितानन्त्रिषु तुच्छके । तारकाप्युडुवास्त्रिया मित्यमरः ॥५०॥

अथोद्यतोम्बुराजतः श्रियं खमाप राजतः ।
यथा घटो व्यराजत स्मराग्रगः सराजतः ॥

अथ उद्यतः अम्बुराजतः श्रियं खं आप राजतः ।
यथा घटः व्यराजत स्मराग्रगः सराजतः ॥ ५१ ॥

अथेति । अथानन्तरम् अम्बुराजत उदधेः सकाशात् उद्यतः उद्गतः स चन्द्रो व्यराजत शुशुभे खम् आकाशं राजतः चन्द्रात् श्रियमाप प्राप । यथा स्मराग्रगः काम-पुरोवर्त्ती राजतो रूप्यमयो घटः शोभते । यथा शब्द-इवार्थे । उदधेरुत्थितश्चन्द्रो मदनभूपप्रस्थानाभिषेकरूप्य-कलश इव रराजेति तात्पर्य्यम् । श्वेतरूप्येपि रजतं हेम्नि रूप्ये सिते त्रिषु । व्यराजतेति राजतेर्लङि ॥५१॥

दधतं कालं कालंकालंकालं वियोगिनी शशिनन्तं ।
अध्वगकालं कालंकालं कालं प्रसमीक्षितुमोद्यन्तं ॥

दधतं कालं कालंकालंकालं वियोगिनी शशिनं तम् ।
अध्वगकालं कालंकालं का अलं प्रसमीक्षितुं प्रोद्यन्तम् ॥ ५२ ॥

दधतमिति । का वियोगिनी विरहिणी तं शशिनं प्रसमीक्षितुं द्रष्टुमलं समर्था न कापीत्यर्थः । कथम्भूतं ? कालं कृष्णवर्णं यत् कालंकालंकालं कलङ्क एव कालङ्कः स चासौ अलङ्कालो ऽलङ्कारो रलयोरैक्यात् यमके न

दोषः। तं दधतं धारयन्तम्। अध्वगकालं अध्वगानां पथिकानां कालं नाशकं। एवं कालंकालं काले काले रात्रौ रात्रौ मोदयन्तं प्रकर्षेणोदयन्तम्। कृष्णे नीलासितश्यामकालश्यामलमेचकाः। कालकालमतिनित्यवीप्सयोरिति द्विर्वचनम्। कालाध्वनो रत्यन्तसंयोगे इति द्वितीया ।५२॥

क्षरत्तुषारशीकराः प्रबुद्धकैरवाकराः।
ततोजजृम्भिरे करा जगत्सु शार्वरीकराः॥

क्षरत्तुषारशीकराः प्रबुद्धकैरवाकराः।
ततः जजृम्भिरे कराः जगत्सु शार्वरीकराः॥ ५३॥

क्षरदिति। ततोनन्तरं क्षरत्तुषारशीकराः क्षरन्तः स्रवन्तः तुषारशीकराः तुहिनजलकणा येभ्यस्तादृशाः। एवं प्रबुद्ध उत्फुल्लः कैरवाकरः कुमुदसमूहो येभ्यस्तादृशाः शार्वरीकराः चन्द्रसम्बन्धिनः शर्व्वरीकरश्चन्द्रः तस्येदमित्यण्। कराः किरणा जगत्सु लोकेषु जजृम्भिरे विजृम्भिताः। बलिभागांशव: करा:। जजृम्भिरे इति जृभिविनामे विकाशे चेत्यस्माल्लिटि ॥५३॥

वधूस्तदानुनिन्यिरे नये नये नये नये।
वशं नरोनयन् समुन्नते नते नते नते॥

वधूः तदा अनुनिन्यिरे नयेन येनयेन ये।
वशं नरः अनयन् समुन्नतेन तेननतेन ते॥ ५४॥

बध्विति । तदा चन्द्ररश्मिपातानन्तरं ये नरो ये पुरुषाः येन येन नयेन यया यया नीत्या उपायेन बध्वः कामिन्यः अनुनिन्यिरे अनुनीतवन्तः । ते पुरुषाः समुन्नतेन समृद्धेन तेन तेनोपायेन वश्यं स्वाधीनताम् अनयन् अनैषुः । येन येनोपायेन पादा नत्या स्त्रियोऽवश्या वश्यमागताः तेनैव वश्यं चक्रुरिति भावः ॥ ५४ ॥

सहा सहावमादरैः सहा सहाः स्मरस्य ते ।
सुरा सुरा यथामृते सुरा सुरागमादधुः ॥

सहासहावं आदरैः सह असहाः स्मरस्य ते ।
सुरासुराः यथा अमृते सुरासु रागं आदधुः ॥ ५५ ॥

सहेति । स्मरस्य कामस्य असहा असहिष्णव स्ते कामुकजनाः सहासहावं हासहावादिभावसहितं यथा स्यादेवम् आदरैः सह सादरं सुरासु मधुषु रागं पानानुरागमादधुर्दधिरे । अनन्तरं कामुकजनाः हावादिसहितं सुरां पपुरिति भावः । यथा सुरासुरा देवासुरा अमृते रागं कुर्वन्ति । सुराहलिप्रियाहालापरिस्रुद्वरुणात्मजाः । आदधुरिति दधतेर्लिटि । यच्चोक्तं भरतेन । अलङ्कारस्वभावत्वे ज्ञेया भावारसाश्रयाः । यौवनेऽभ्यधिकाः स्त्रीणां विकारा वक्त्रगात्रजाः ॥ देहात्मकं भवेत् सत्वं सत्वाद्भावः समुत्थितः । भावात् समुत्थितो हावो हावाद्धेला समुत्थिता ॥ लीला विलासो विच्छित्ति विभ्रमः किलकिञ्चितम् ।

मोट्टायितं कुट्टमितं विव्वोको ललितं तथा । विहृतञ्चेति विज्ञेया दश स्त्रीणां स्वभावजाः । प्रियस्यानुकृति लीला श्लिष्टा वाग्वेषचेष्टितैः । विलासोतिविशेषोस्ति प्रियाया वासनादिषु । मण्डनाच्छादनन्यासो विच्छित्तीरूपदर्शतः । चित्तस्त्यनवस्थानं शृङ्गाराद् विभ्रमो मतः । हर्षाङ्गादित-गीतादिव्यामिश्रं किलकिञ्चितम् । मोट्टायितं प्रियं स्मृत्वा सांगभङ्गादिजृम्भणम् । दुःखोपचारः सौख्येपि हर्षात् कुट्ट-मितं मतम् । विव्वोकोभिमतप्राप्तावपि गर्वादनादरः । अना-चार्योपदिष्टं स्यात् ललितं रतिचेष्टितम् । वक्तव्यभाषणं व्याजात् विहृतं दर्शितेङ्गितम् ॥५५॥

मधु प्रपीय चाभवन्नता नता नता नताः ।
रमा रमा रमा रमाकुले जनेत्र हालया ॥

मधु प्रपीय च अभवन् नतानताः न ताः न ताः ।
रमा अरं आर मारमाकुले जने अत्र हालया ॥ ५६ ॥

मध्विति । मधु प्रपीय मधु मद्यं प्रपीय पीत्वा तास्ता स्त्रियः नता नम्रा अनता अनम्राश्च नाभवन् अपितु अभ-वन् । या याः पूर्वं नम्राः तास्ता मधुपाने कृते ऽनम्रा अभवन् । या या अनम्रास्तास्ता मधुपाने कृते नम्रा अभवन् । मारमाकुले मारः कन्दर्पस्तस्य मा लक्ष्मीः

कन्दर्पशोभा तया आकुलेऽत्र जने हालया सुरया करणेन रमा श्रीः अरं शोभमेव आर प्राप्तवती। सुरापानात् स्त्रीजने ऽन्यैव काचन शोभा अभूदिति तात्पर्य्यम्। प्रपीयेति। पीङ्पानेऽस्य रूपं पिबतेस्तु प्रपायेति भवितव्यम्। अभवन्निति भवते लिटि। आरेति अर्त्तें लिटि। मधु मद्ये मधु क्षौद्रे मधु पुष्परसे विदुः। यद्वा। पूर्वश्लोकोक्ता ये कामिजनाः च पुनः मधु आसवं प्रपीय पीत्वा अतानतानतानताः अभवन् अतानम् अचरम्पून्यं यत्तानं गानमूर्च्छनाविशेषः तस्य भावस्तत्ता तस्यां अनताः परायणाः सुरां पीत्वा गानोत्सुका अभवन्नित्यर्थः। अत्र वसन्ते। जने कामिजने अथवा अत्र जने अस्मिन् कामिजने हालया मदिरया आकुले मत्ते सति रमा शोभा मारं कामं अरम् अत्यर्थम् आर प्राप मदिरापानेन कामो विजृम्भित इत्यर्थः॥ ५६॥

भ्रमरैर्द्रागस्तानि प्रपीय च मधूनि सानुरागस्तानि।
दत्तनिरागस्तानि प्रापच्छयनञ्जनस्त्वरागस्तानि॥

भ्रमरैः द्राग् अस्तानि प्रपीय च मधूनि सानुरागः तानि।
दत्तनिरागस्तानि प्रापत् शयनं जनः त्वरागः तानि॥ ५७॥

भ्रमरैरिति। सानुरागः सस्नेहः। एवं त्वरागः त्वरया वेगेन गच्छतीति त्वरागः जनः कामुकलोको दत्त-

निरागस्का निरपराधता यैस्तादृशानि विस्मारितापराधानि । भ्रमरैः षड्ङ्घिपकोपरिस्थितैः द्राक् झटिति त्यक्तानि त्यक्तानि मधूनि मद्यानि प्रपीय पीत्वा शयनं पर्यङ्कञ्च प्रापत् अश्रिश्रियत् । कीदृशं शयनम् ? तानि तानो विस्तारो वितानो वा अस्यास्तीति तानि ॥ ५७ ॥

**ससमुद्रमहेलाभिस्फुरितगुणाभिस्ततः स्मरमहेलाभि । श्रीः प्रवरमहेलाभिस्तथैव युवपंक्तिभिः परमहेलाभिः ॥**

ससमुद्रमहेलाभिस्फुरितगुणाभिः ततः स्मरमहे अलाभि ।
श्रीः प्रवरमहेलाभिः तथा एव युवपंक्तिभिः परमहेलाभिः ॥ ५८ ॥

ससेति । ततोनन्तरं ससमुद्रमहेलाभिस्फुरितगुणाभिः । ससमुद्रा ससागरा महती दीर्घा या इला भूमिस्तस्यां अभिस्फुरिताः श्रुतागुणा यासां ताभिः । परमहेलाभिः परमा उत्कृष्टा हेला लीला यासां ताभिः प्रवरमहेलाभिः प्रचुरस्त्रीभिः स्मरमहे कन्दर्पोत्सवे श्रीः शोभा सुखं वा अलाभि प्राप्ता । तथैव तेन प्रकारेण युवपंक्तिभिः तरुणश्रेणिभिः श्रीः प्राप्ता । यद्वा । ताभिः करणेन सह वा युवपंक्तिभिः शोभा प्राप्ता । उभयत्रापि विशेषणम् । अलाभीति । डुलभष् प्राप्तावित्यस्य लुङि चिण् भावकर्मणोरिति चलेश्चिणिकृते लभेश्चेति नित्यं नुमिप्रसक्ते विभाषाचिण्णमुलोरिति नुमागमाभावे वृद्धौ रूपम् । महती इला महेला गोभूवाचस्त्विडाइलाः । महेला महिलापिचेति द्विरूपकोषः ॥५८॥

तयार्द्रधीरमायया मुदामनारमायया ।
नलो विहारमाययावधःकृता रमायया ॥

तया आर्द्रधीः अमायया मुदां अनारमायया ।
नलः विहारम् आययौ अधःकृता रमा यया ॥ ५६ ॥

तयेति । आर्द्रधीः शृङ्गारस्निग्धबुद्धि र्नलो मुदां हर्षाणाम् अनारमायया आरमो विरतिस्तद्रहितः अनारमः अयः शुभावहोविधि र्यस्यास्तादृश्या हर्षाविरतभाग्ययेत्यर्थः । अमायया मायारहितया तया दमयन्त्या सहितो नलो विहारं क्रीड़ाम् आययौ आगमत् । यद्वा या दमयन्ती मुदां हर्षाणाम् अनारमाय अविश्रामाय भवति । तया सह नलो विहारम् आययौ । यया रमा लक्ष्मीरधःकृता रूपेण सौभाग्येन वा लक्ष्मीतोप्यधिका तादृश्या दमयन्त्या नलो विजहारेति भावः । आययाविति यातेर्लिटि ॥५६॥

साशंकामायासीत्कृतिनी भैमी नलस्य कामायासीत् । कामनिकामायासीद्युतिन्तद्दिष्टांस चाधिकामायासीत् ॥

सा अशंका अमाया आसीत् कृतिनी भैमी नलस्य कामाय आसीत् ।
कामनिकामायासी द्युतिं तद्दिष्टां सः च अधिकां आयासीत् ॥६०॥

साशंकेति । सा भैमी अशङ्का शङ्कारहिता कृतिनी निपुणा पुण्यवती वा अमाया निर्व्याजा आसीत् अभूदित्यनेन प्रकारेण नलस्य कामाय अभिलाषाय आसीत् उज्जगाम । नलकामम् अपुपूरदित्यर्थः । कामनिका-

मायासी कामेन मन्मथेन निकामम् अत्यर्थम् आयासी आयासः परिश्रमो यस्य तादृक् स च नलस्य तदिष्टां दमयन्तीप्सिताम् अधिकां दुरतिं क्रीड़ां आयासीत् आगतः । दमयन्ती एतावसरे निर्व्याजाशङ्का नलस्याभिलाषाय बभूव नलस्य दमयन्तीमनोऽभिलषितं समपूरयदिति परस्परसोत्कर्षोऽभूदिति भावः । आसीदित्यस्तेरूपं लङि । अपरमपि असगताविल्यस्य लुङि । आयासीदिति यातेर्लुङि । यद्वा । भैमी कथम्भूता ? साशङ्का सभया प्रौढ़रात्रित्वात् स्त्रीस्वभावत्वाच्च पुनः अमाया निःकपटा पुनः सीत्कृतिनी सीत्कारवती । यद्वा साशङ्का मायासीत्कृतिनीत्येकं विशेषणं आशङ्कासहिता या माया कापट्यं तया सीत्कृतिनी भयच्छलेन सीत्कारवती । यद्वा मायया छलेन सीत्कृतिनी नलस्य कामाय मनोरथसिद्ध्यै आसीत् बभूवेत्यर्थः ॥ ६० ॥

इति नानामायानां नलः कलिभुवां बलेननानामायानाम् । व्यसनानामायानान्निधिररमद्राज्यजन्मनामायानाम् ॥

इति नानामायानां नलः कलिभुवां बलेन नानामायानाम् ।
व्यसनानां आयानात् निधिः अरमत् राज्यजन्मनां आयानाम् ॥६१॥

इतीति । इत्यनेन प्रकारेण नलो नैषधः नानामायानां नानाविधामायाव्याजानि येषु तादृशानां कलिभुवां कलौ भवन्तीति कलिभुवः कलिजनितास्तेषां व्यसनानां

ज्ञिपदां आयानात् आगमनपर्य्यन्तम् आगमनावधेः अर-मत् अक्रीडत् कथम्भूतः? बलेन करणेन राज्यजन्मनां राज्ये जनपदे जन्म येषां तादृशानां आयानां धनागमनानां निधि निधानमाधार इति यावत् अभवदिति पाठे। नानादक्षकलिजनितापत्त्यागमनावधि नलो राज्यश्री-भाजनम् अभूदिति भावः। अयः शुभावहो विधिः। अभव-दिति भवतेर्लङि ॥६१॥

**स्वयम्वरादनन्तरं मही मही महीनधीः।**
**ररच नैषधस्तदा रराज राजराजराः॥**

स्वयम्वरादनन्तरं मही महीं अहीनधीः।
ररच नैषधः तदा रराज राजराजराः ॥ ६२ ॥

स्वयमिति। तदा तस्मिन् काले नैषधो नलः स्वय-म्वरात् अनन्तरं स्वयम्वरात् परतः महीभुवं ररच अपा-लयत्। कीदृशः? महीं सोत्सवः पुनः अहीनधीः विशाल-बुद्धिः। राजराजराः। राजराजः कुवेरस्तस्येव राः धनं यस्य तादृशः सन् रराज शुशुभे। स्वयम्बरोत्तरं भुवमरक्षत् नलः कुवेरप्रायसम्पच्चासीदिति भावः। राज-राजो धनाधिपः। अर्थैर्विभवा अपीत्यमरः। रराजेति राजतेर्लिटि ॥ ६२ ॥

इति बोधिनीटीकासहिते श्रीकालिदासकृते
नलोदये सत्काव्ये द्वितीयोच्छ्वासः।

---

# तृतीयः सर्गः ।



अथ सुरवृषभाःस्वरतः प्रेक्ष्यकलिंप्रस्थितामहाद्भा-
स्वरतः । यः क्षतिषु शुभास्वरतः पप्रच्छुस्तद्गति-
ङ्घननिभाःस्वरतः ॥

अथ सुरवृषभाः स्वर् अतः प्रेक्ष्य कलिं प्रस्थिताः महात् भास्वरतः ।
यः क्षतिषु शुभासु अरतः पप्रच्छुः तद्गतिं घननिभाः स्वरतः ॥१॥

अथेति । अथ स्वयम्बरादनन्तरम् अतोऽस्माद् भास्वरतो देदीप्यमानात् महात् स्वयम्बरोत्सवात् स्वः स्वर्गं प्रस्थिताः प्रचलिताः सुरवृषभाः सुरोत्तमा इन्द्रादयः कलिं प्रेक्ष्य तद्गतिं तस्य कले र्गतिं गमनं पप्रच्छुः । यः कलिः शुभासु क्षतिषु कार्य्येषु अरतः न रतः विरक्त इति यावत् । कीदृशाः सुरोत्तमाः ? स्वरतः कण्ठध्वनेः घननिभा घनो मेघस्तत् सन्निभाः । कलिविशेषणं वा । दमयन्तीस्वयम्बरात् स्वर्गं गच्छन्तो देवाः पथिमध्ये कलिं दृष्ट्वा कुत्र गच्छसीति तद्गमनं पृष्टवन्त इति भावः । स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः । मह उद्धव उत्सव इत्यमरः । पप्रच्छुरिति प्रच्छधातोर्लिटि ॥ १ ॥

यशसामायामितया हृतःश्रियाभीमदुहितृमायासितया। तदधिगमायामितया स्पृहयाद्यमनुष्यमायामितया॥

यशसां आयामितया हृतः श्रिया भीमदुहितृमायां इतया।
तदधिगमाय अमितया स्पृहया अद्य मनुष्यं आयामि तया॥ २॥

यशसामिति। देवै र्गमनं पृष्टः कलिराह। यशसाम् आयामितया कीर्त्तीनां दैर्घ्यवत्तया अतियशस्विन्या। इन्नन्तात् तल्। भीमदुहितृमायां भीमस्य राज्ञो दुहिता पुत्त्री दमयन्ती तन्मायां तद्व्याजम् इतया तया श्रिया लक्ष्म्या हृतः गतया आहृतचित्तः तदधिगमाय दमयन्तीरूपलक्ष्मीलब्धये ऽमितया असंख्यया बहुतरया स्पृहया इच्छया अद्य अस्मिन् वर्त्तमानदिने मनुष्यलोकमायामि गच्छामि। आत्मजस्तनयः सूनुः सुतः पुत्त्रः स्त्रियान्त्वमी। आहुर्दुहितरं सर्व्वे इत्यमरः। आयामीति यातेर्लटि॥२॥

इति विकलोमायाया स्तदुक्त ऊचे जनोऽमलोमायायाः। शुभशीलोमायायाः स्थितोनलोऽस्यावरोऽनुलोमायायाः॥

इति विकलः मायायाः तदुक्तः ऊचे जनः अमलः मा यायाः।
शुभशीलः अमायायाः स्थितः नलः अस्याः वरः अनुलोमायायाः॥ ३॥

इतीति। इत्यनेन प्रकारेण तदुक्तस्तेन कलिनोक्तो

भाषितः अमलो निर्म्मलः अमरो वा रलयोरैक्यात् जनो देवलोक ऊचे ऽकथयत् किं अकथयत् ? इत्याह अमायाया निर्व्याजायाः अस्याः दमयन्त्याः शुभशीलः उत्तमस्वभावो नलः वरः स्थितः वरः प्रसिद्धः । कीदृश्याः ? विकलोमायायाः विकलो दीनः उमायाः पार्व्वत्या अयः शुभावहो विधि र्यया तादृश्याः पार्व्वत्युत्तमभाग्यायाः । कीदृश्याः ? अनुलोमायायाः अनुलोमः अनुकूल अयः शुभादृष्टं यस्याः तस्याः । मा यायाः मा गच्छ । दमयन्त्या नलो वृतस्त्वं मागच्छेति भावः । यद्वा मायाया दम्भतः बुद्धितो वा विकलः सन् त्वं मागच्छेत्यर्थः । यद्वा देवलोकविशेषणम् । मायाशाम्बरीरूपा दम्भो बुद्धिश्चेति हेमः ॥ ३ ॥

वच इति वस्वादिभ्यः श्रुत्वाकलिरुत्सवासवखादिभ्यः।
मखसर्व्वस्वादिभ्यस्नुकोपदोषात्समदभुवः स्वादिभ्यः॥

वचः इति वस्वादिभ्यः श्रुत्वा कलिः उत्सवासवखादिभ्यः ।
मखसर्वस्वादिभ्यः चुकोप दोषात् सः मदभुवः स्वात् इभ्यः ॥ ४ ॥

वचइति । स कलिरुत्सवासवखादिभ्यः उत्सवलक्षणो य आसवो मधु तत्स्वादिभ्यः पीतवद्भ्यः । मखसर्व्वस्वादिभ्यः । मखस्य यज्ञस्य सर्व्वस्वं यज्ञधनं सोममत्तुं शीलं येषां ते तादृग्भ्यो वस्वादिभ्य इन्द्रादिदेवेभ्यः इत्युक्तप्रकारं वचः वचनं श्रुत्वा मदभुवः मदात् दर्पात् भवतीति मदभूः

तस्मादिति रोषविशेषणं स्वात् स्वकीयात् दोषात् दूषणाच् चुकोप क्रुद्धो ऽभूत् कलिः कथम्भूतः ? इभ्यः आढ्यः । मध्वासवो माधवकः । सप्ततन्तुर्मखः क्रतुः । कुप कोपे अस्मान्लिटि । स्वं ज्ञातावात्मनि स्वन्त्रिष्वात्मीये स्वोऽस्त्रीयां धने । इभ्य आढ्यो धनी स्वामीत्यमरः ॥ ४ ॥

प्रबलतमानबलतया संयोज्यनलेसुरोत्तमानवल-तया । तेनामानवलतया तरुणेवतयास्यतां न मानवलतया ॥

प्रबलतमान् अबलतया संयोज्य नले सुरोत्तमान् अवलत या ।
तेन अमा नवलतया तरुणा इव तया आस्यतां न मानवलतया ॥ ५ ॥

प्रबलेति । या दमयन्ती सुरोत्तमान् देवश्रेष्ठान् प्रबल-तमान् उत्कृष्टबलान् अबलतया अबलत्वेन संयोज्य विगणय्य मानवलतया अहङ्कारसामर्थ्येन नलेऽवलत नले ऽन्वरज्यत । यद्वा तया किम्भूतया ? मानवलतया मनुष्यरतया रलयो-रैक्यात् तया दमयन्त्या तेन नलेन अमा सह न आस्यतां न स्थीयताम् । कया केनेव ? नवलतया नवीनव्रतत्या तरुणेव वृक्षेणेव । या दमयन्ती देवान् असमर्थान् ज्ञात्वा नलम् अवरिष्ट सा नलेन सह वियुज्यतामिति शशापेति भावः । यद्वा प्रबलतमान् देवान् संयोज्य स्वयम्बरमानाय्याबलतया स्त्रीत्वेन नले या अनुरक्तेत्यर्थः । अबलाया भावो ऽबलता । त्वतलोर्गुण-वचनस्येति पुंवद्भावः । यथा लता सुरद्रुमान् अबलतया

असारत्वेन संयोज्य नले तुच्छतयो वल्यते पश्चात्तेन सह तया क्षणमपि न स्थीयते तथेत्यर्थः। लतया कथम्भूतया? मानबलतया माने विस्तारे बलता अतिशयो यस्यास्तयेति-भावः। अमा सह समीपे च। आस्यतामित्यास उप-वेशन इत्यस्य भावे लोटि ॥ ५ ॥

इति वलवानन्तरतः कलिः किलैतज्जगादवानन्त-रतः। अवहितवानन्तरतः सम्टद्विषुनलस्यविवि-शिवानन्तरतः॥

इति बलवान् अन्तरतः कलिः किल एतत् जगाद वानं तरतः।
अवहितवान् अन्तर् अतः सम्टद्विषु नलस्य विविशिवान् अन्तरतः॥ ६ ॥

इतीति। इत्यनेन प्रकारेण बलवान् कलिरेतत् पूर्वोक्तं शापवचनं जगाद। किल निश्चये। अतः अन-न्तरम् अन्तरतः छिद्रतः छिद्रम् अवकाशं वा प्राप्य ल्यब्-लोपे पञ्चमी। यद्वा अन्तरतः अन्तर्ज्ञानात् सम्टद्विषु सम्पत्सु सत्सु। तद्दृष्टद्विष्विति पाठे पूर्वोक्तशापवचन-दृष्टिषु इत्यर्थः। अवहितवान् सावधानः। वानं वन-समूहं तरतो गच्छतो नलस्यान्तः हृदयं विविशिवान् प्रवि-वेश। यद्वा अन्तरतदृष्टद्विषु इति पाठे अवकाशशापदुःख-बाहुल्येषु अवहितवान् सावधानः। यद्वान्तरं विनाशं तनोतीति अन्तरतत् तादृशा दृष्टयः नलस्य ऋद्धयो धना-गमादयेषु। यद्वा अन्तरतदृष्टद्विषु अन्तरच्छिद्रे तदृष्टद्विषु

छिद्रबाहुल्येषु सावधानः। अथवान्तरतद्दृष्टद्धिषु अन्तरे मध्ये तद्दृष्टद्धिषु तस्य नलस्य दृद्धिषु धनागमेषु अवहितवान् यया दृद्धिर्न भवतीति । पुनरन्तरतः नाशरतः। एवं पूर्वोक्तं शापवचनं कलिरुक्तवान् । प्रवेशछिद्रान्वेषणसावधानस्य स्वगयां गतस्य नलस्य हृदयमध्यास्तेति भावः। अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्येषु। छिद्रात्मीय- विनावहिरवसरमध्येऽन्तरात्मनि च। अन्तो ऽध्यवसितौ मृत्यौ स्वरूपे निश्चयेऽन्तिके। वानमिति तस्य समूह इत्यण्। विशप्रवेशन इत्यस्माल्लिटि क्सौ क्ते विभाषागमहनविद- विशामिति वसोरिड्विकल्पः॥ ६॥

सोऽथ सदारोदरतः पुष्करविजितोनलः सदारो- दरतः। व्याजाद्दारोदरतः स्वपुरान्निर्यातवा- नुदारोदरतः॥

सः अथः सदा रोदरतः पुष्करविजितः नलः सदारः दरतः।
व्याजात् दारोदरतः स्वपुरात् निर्यातवान् उदारोदरतः॥ ७॥

सोऽथेति। अथ कलिप्रवेशानन्तरं दारोदरतः द्यूत- सम्बन्धिनो व्याजात् कपटात् पुष्करेण भ्रात्रा विजितः परा- जितः स नलः दरतः भयात् पीड़या वा उदारोदरतः उदारं विशालम् उदरं मध्यं यस्य तादृशात् स्वरात् स्वराष्ट्रात् नगराद्वा सदारः दारा दमयन्ती तया सहितो निर्यातवान् निरगमत्। यद्वा राज्यभ्रंसानन्तरं कलिसंक्रमणात् नलस्य जलोदरं जातमिति पुराणवार्त्ता दृहदुदरहेतोरित्यर्थः। कीदृशः? सदा सर्वदा रोदे असुक्षरणे रतोऽनुरक्तः सद-

न्निति यावत् । दरोदरदुरोदरे इति वैजयन्ती । तस्येद-मित्यण् पञ्चम्यास्तसिल् । अगारे नगरे पुरः । दरो-स्त्रियाम्भयेश्वभ्रे । उदारो दातमहतोरित्यमरः ॥ ७ ॥

असमानानाहारिः स्मैनं शब्दांश्च किममुनानाहारि ।
अपितेनानाहारि भ्रान्तम्भूषणमपास्य नानाहारि ॥

असमानान् आह अरिः स्म एनं शब्दान् च किं अमुना न अहारि ।
अपि तेन अनाहारि भ्रान्तं भूषणं अपास्य नानाहारि ॥ ८ ॥

असेति । अरिः शलः पुष्करो रिपुरेव वा एन नलं असमानान् अनुचितांश्च शब्दान् वाणीराह स्म भर्त्सनवच-नानि अश्रुश्रुवदित्यर्थः । अमुना नलेन किं वस्तु नाहारि न हारितम् । यद्वा अमुना पुष्करेण अस्य नलस्य सम्बन्धि किं वस्तु न अहारि अपि तु सर्व्वमेव हृतामित्यर्थः । तेन नलेन हारि मनोज्ञं नाना बहुविधं भूषणम् अलङ्कारं हारकुण्डलकेयूरादिकम् अपास्य त्यक्त्वा अनाहारि आहा-रस्याभावो ऽनाहारः सोऽस्यास्तीत्यस्मिन्निति ताहशमाहार रहितं यथा स्यादेवं भ्रान्तं वनेषु भ्रमितम् । द्यूते पुष्कर-विजितो नलो भूषणम् अपास्य वने बभ्रामेति भावः । अहारीति हृञोलुङि चिणि ॥ ८ ॥

शुचमकरोदन्यस्य भ्रमन्नलः पथिपदं सरोदन्यस्य ।
नचपुनरोदन्यस्य त्राणायाभूत् परम्परोदन्यस्य ॥

शुचम् अकरोत् अन्यस्य भ्रमन् नलः पथि पदं सरोदं न्यस्य ।
न च पुनः ओदन्यस्य त्राणाय अभूत् परं परोदन्यस्य ॥ ९ ॥

शुचमिति । पथि मार्गे सरोदं रोदनं रोदस्तेन सहितं साश्रुः यद्वा स नलः रुदन् रोदनं कुर्व्वन् पदं चरणं विन्यस्य चिप्त्वा भ्रमन् अटन् अन्यस्य प्रेचकस्य पुष्करस्य वा शुचं शोकमकरोत् अकार्षीत् । पुनः अस्य नलस्य परोदन्यस्य परा उदन्या पिपासा यस्य तादृशस्य ओदन्यस्य ओदनार्हस्य परम-न्यदन्नजलादिना त्राणाय रक्षणाय नाभूत् नाभवत् । नलः कण्टकवति मार्गे कोमलचरणतया रुदन् परिभ्रमन् सर्वेषां शोकम् अकरोत् । क्षुत्तृषितस्यास्य रक्षणाय कोपि नाभूत् निराहार एवासीदित्यर्थः । मन्युशोकौ तु शुक् स्त्रियाम् । पदं व्यवसितत्राणस्थानलक्ष्मांघ्रिवस्तुषु । उदन्येति तदर्हतीति यः । अशनाया बुभुक्षा क्षुद्ग्रासस्तु कवलार्थकः । उदन्या तु पिपासा तृट् इत्यमरः । अभूदिति भुवो लुङि ॥९॥

**नास्य रमानावासस्तत्र खगाजह्रुरर्थ्यमानावासः ।**
**अपि मदमानावासस्वरोषजलधिन्तरन्नमानावासः ॥**

न अस्य रमा न आवासः तत् च खगाः जह्रुः अर्थ्यमानाः वासः ।
अपि मदमानो आस स्वरोषजलधिं तरन् चमानावा सः ॥ १० ॥

नास्येति । अस्य नलस्य न रमा लक्ष्मी र्न आवासो गृहम् आच्छादनं वा आसीदित्यध्याहारः । तत्रावासः तस्य वसनम् अर्थ्यमाना क्रीडार्थं आहरेति दमयन्त्या याच्य-मानाः खगाः कलिमायाविर्भूता हंसाः जह्रुः दमयन्ती परिहितवस्त्रैकदेशं परिधाय हंसजिघृक्षया स्ववस्त्रं

तदुपरि क्षिप्तं तद्वस्त्रं गृहीत्वा हंसा ययुः इति पुराण-वार्त्ता । स नलः क्षमानावा शान्तिनौकया स्वरोषजलधिं स्वक्रोधसमुद्रं तरन् उल्लङ्घयन् मदं गर्वं मानमभिमानं च श्वास चिक्षेप । लक्ष्मीः स्थलं वास्य नासीत् कुत्रापि न स्थितवानित्यर्थः । पथि च तद्वासो गृहीत्वा पक्षिणो गताः असौ च गर्वाभिमानावत्याक्षीत् । श्वासेत्यसुक्षेपण इत्यस्य लिटि ॥ १० ॥

तापशतेन वसा नौ द्रवेदितीमौ नगावृते नवसानौ ।
चेलान्तेन वसानौ चेरतुरेकेन पर्वते नवसानौ ॥

तापशतेन वसा नौ द्रवेत् इति इमौ नगावृते अनवसानौ ।
चेलान्तेन वसानौ चेरतुः एकेन पर्वते नवसानौ ॥११॥

तापेति । इमौ दमयन्तीनलौ तापशतेन तापाधिक्येन नौ आवयो र्वसामेदो द्रवेत् शोष्यतीति हेतोरेकेन चेलान्तेन वसनखण्डेन वसानौ छादयन्तौ अनवसानौ न अवसानं मृत्युं ययोस्तादृशौ नवसानौ नवं नूतनं सानु शृङ्गं यस्य तादृशे पर्वते नगे ईश्वरावृते युते चेरतुः चलितवन्तौ । अतिघर्मो एकेन पटान्तेनाच्छादयन्तौ इमौ मरणरहितौ पर्वते चलिताविति भावः । नगावृते इत्यत्र सुखावृते इति पाठे सुखं विनापि अविनाशिनौ इत्यर्थः । छन्दस्तु वदा वसा । युष्मदस्मदोः षष्ठी चतुर्थी द्वितीयास्थयोर्वांनावा-

तिनौ इत्यादेशः। द्रवेदिति द्रुगतावित्यस्य लिङि। शैल-वृक्षौ नगावगौ। स्नुः प्रस्थः सानुरस्त्रियामित्यमरः। चेरतुरिति चरतेर्लिटि॥ ११॥

तद्दासः स्वापायान्नीतिरियं चेति विपदि
सस्वापायाम्। निजवासः स्वापायान्नि-
कृत्य तामसुञ्चदिह स स्वापायाम्॥

तद्दासः स्वापायां नीतिः इयं च इति विपदि सस्वापायां।
निजवासः स्वापायात् निकृत्य तां अमुञ्चत् इह सः स्वापायां॥१२॥

तद्दासइति। स नलः कलिच्छन्नबुद्धित्वात् विपदि विपत्तौ इयमेव नीतिः इति मत्वा तां दमयन्तीं स्वापायां स्वापम् आयातीति स्वापाया तादृशीं सुप्ताम्। सस्वापायां स्वस्वापायो विश्लेषः तत्सहितां पुनः स्वापायां स्वस्मात् अप-गतः सुभावहोविधि र्यस्याः तां दूरदृष्टामित्यर्थः। तां दम-यन्तीमिह वने निजवासस्वापायात् निजं स्वकीयं यद्वासः स्वञ्च धनं तदपायात् तदपगमात् तद्वासः तस्या दमयन्त्या वासो वसनं निकृत्य अच्छिद्य अमुञ्चत् अत्याक्षीत्। यद्वा विपदि किम्भूतायां? स्वापायां स्वेन आत्मना आप्यते प्राप्यते स्वापा तस्यां सत्यां सस्वापायां स्वापयुक्तायां दमयन्त्यां सत्याम् इत्यर्थः। नलो वने प्रसुप्तां दमयन्तीं वसनार्द्धं छित्वाऽमुञ्चदिति भावः। अमुचदिति पाठे लुङि ऌदि-त्वादङ्॥ १२॥

बभ्रामानस्तेन श्रमेण कलिना विधूयमानस्ते न ।
सहि रिपुमानस्तेनः स्वभाग्यदोषाः क्व समहि-
मानस्तेन ॥

बभ्राम अनस्तेन श्रमेण कलिना विधूयमानः ते न ।
सः हि रिपुमानस्तेनः स्वभाग्यदोषाः क्व समहिमानः तेन ॥१३॥

बभ्रामेति । रिपुमानस्तेनः शत्रुगर्वापहारी स नलः श्रमेण प्रयासेनानस्तेन नास्तं गतेन सता अत्यन्तपरिश्रमेण दुःखात् तेन कलिना विधूयमानः कम्पितः सन् । अथवा कलिना अनस्तेनामुक्तेन श्रमेण यस्य श्रमस्य दुःखस्य कलिः प्रयोक्ता तेन परिश्रमेण दह्यमानः सन् बभ्राम पर्य्यटितवान् । हि यस्मात् कारणात् ते स्वभाग्यदोषाः स्वपूर्वार्ज्जितदुःकृतादिकर्म्मदोषाः क्व कस्मिन् समहिमानःसमहत्वाः न अपि तु सर्वत्रैव पूर्वकर्म्मप्रधानम् । यतोऽयमीदृगवनीशोप्येकाकी गतराज्यभारो वने पर्य्यभ्रमीत् ॥ १३ ॥

मृगकुलमारसदाविश्रममभितापातुरोममार
सदा विः । स्फुरिततमा रसदा विस्तृता नगायत्र
विपिनमार सदावि ॥

मृगकुलं आरसत् आविभ्रमं अभितापातुरः ममार सदा विः ।
स्फुरिततमा रसदा विस्तृता नगाः यत्र विपिनं आर सदावि ॥१४॥

मृगेति । स नलो दाविदावो वनवह्निस्तत् संयुक्तं प्रज्वलद्दावं विपिनं वनमार जगाम । यत्र यस्मिन् विपिने

मृगकुलं मृगगणम् आविश्रमम् आसमन्ततः अविश्रमं विश्रान्तिरहितम् आविर्भूतश्रमं वा यथा स्यादेवम् आरसत् आर्त्तिशब्दं कुर्वत् जलाभावात् तृषाकुलं ममार। विः पक्षी अभितापातुरो ऽभिसमन्ततो यस्तापः सन्तापः तेन आतुरः क्लान्तः सदा सर्वदा ममार मृतवान्। सदावीति निर्विसर्गपाठे विपिनं किम्भूतम्? अवि न विद्यन्ते वयः पक्षिणो यत्र तादृशम् अभितापातुर इति नलविशेषण मित्यर्थः। विस्तृता विस्तीर्णशाखाः रसदाः रसो भयानकरसः तं ददातीति तादृशाः निर्य्यासदाः वा। स्फुरिततमाः प्रकाशिततमा नगा वृक्षाः। स्फुटिततमा इति पाठे विदीर्णाः विस्तृताः भूमौ आस्तीर्णाः रसदाः निर्य्यासदाः दवाग्निना दह्यमानत्वात् सशब्दा वा नलो दवानलाकुलं वनं गतवान्। यत्र भयप्रदविस्तीर्णशाखाः वृक्षाः यस्मिन् अतिगहनतरुदर्शनेन भयं भवतीति यावत्। यत्र चला अलसा मृगा इतस्ततो धावन्तः कृताक्रन्दाः सन्तो मृताः पक्षिणश्च मृताः। तादृशं विपिनं मरुदेशं गतवानिति भावः॥१४॥

शोकभरोदस्तेन स्रुतः स च नलाद्रवेति रोदस्तेन।
इतिमकरोदस्तेन स्वयमित्यूचे भयं पुरोदस्तेन॥

शोकभरोदस्तेन स्रुतः सः च नल आद्रव इति रोदः तेन।
इतिं अकरोत् अस्तेन स्वयं इति ऊचे भयं पुरः अदः ते न॥१५॥

शोकेति। तेन नलेन शोकभरोदस्तेन शोकातिशयेन

उदस्तेन व्याकुलेन उत् ऊर्द्ध्वम् अस्तेन क्षिप्तेन शरीरादुद्भ्रान्तजीवेन । हे नल आद्रवागच्छेति रोदः रोदनं श्रुतः आकर्णितः तेन कारणेन स च नलः द्रुतिं वेगम् अकरोत् । च पुनः हे अस्तेन अस्तः इनोप्रभु र्यस्य अनाथ अदः इदं ते तव भयं न इति पुरोऽग्रे स्वयम् ऊचे उक्तवान् । स्वकमिति पाठे स्वकं स्वकीयम् आत्मसम्बन्धिभयं तव नास्तीत्यर्थः । शोकभरविच्छिन्नचेतसा नलेन नलागच्छेति कर्कोटकनागरोदनं श्रुतं स वेगेन तत्र गत्वा ते इदं भयं न भविष्यतीत्यवोचदिति भावः । अस्तेन इति सविसर्गपाठे अस्तेनः अस्तः कान्त्या तिरस्कृत इनः सूर्य्यो येनेति नलविशेषणम् । द्रुगताविव्यस्य लोटि मध्यमे । ऊचे ब्रुवोलिटि । स्यात् पुरः पुरतोग्रतः । भीतिर्भीः साध्वसं भयमित्यमरः ॥१५॥

क्व भवान् शंसत्वस्यत्वापदमित्याश्रयोन्दशंसत्वस्य ।
तन्देशं सत्वस्य प्राप नलः सत्वरोभृशं स त्वस्य ॥

क्व भवान् शंसतु अस्यतु आपदं इति आश्रयः अन्दशंसत्वस्य ।
तं देशं सत्वस्य प्राप नलः सत्वरः भृशं सः तु अस्य ॥१६॥

क्वेति । स तु नलो भृशमत्यर्थं सत्वरः त्वरायुक्तः सन् अस्य सत्वस्य प्राणिन स्तं देशं प्राप गतवान् भवान् क्वास्तीति शंसतु आपदम् अस्यतु त्यजतु इति निगद्येति यावत् ।

कीदृशो नलः ? अनृशंसत्वस्य अक्रौर्यस्य कारुणिकत्वस्याश्रयो निवासः । रोदनश्रवणानन्तरं नलो गत्वा भवान् क्वास्ति कथयतु आपदं विपत्तिं जहातु इति निगद्य दवाग्निम् अविशदिति भावः । शंसतु शंसुस्तुतावित्यस्यानेकार्थत्वाद्वदनमात्रार्थः अस्त्विति अस क्षेपणे इत्यस्य लोटि । विपत्त्यां विपदापदौ । नृशंसोघातुकः क्रूरः । प्रापेत्यापेर्लिटि । सत्वमस्त्री तु जन्तुषु इत्यमरः ॥१६॥

अथ पवनाशमयन्तं क्वापि दवाग्नौ ददर्श नाशमयन्तं ।
स्वबलेनाशमयन्तं रुजमजिघृक्षच्च पुनरनाशमयन्तं ॥

अथ पवनाशं अयं तं क्वापि दवाग्नौ ददर्श नाशं अयन्तं ।
स्वबलेन अशमयन्तं रुजं अजिघृक्षत् च पुनः अनाशं अयन्तं ॥१७॥

अथेति । अथ समीपगमनानन्तरम् अयं नलः तं पवनाशं पवनं वातम् अश्नातीति पवनाशः तादृशं तं सर्पं कर्कोटकं क्वापि दवाग्नौ कस्मिन्नपि दवदहने अयन्तं गच्छन्तम् इतस्ततः विनाशं क्षतिमयन्तं गच्छन्तं निनश्यन्तं ददर्श अद्राक्षीत् । कीदृशं ? स्वबलेन स्वप्रभावेण रुजं पीडाम् अशमयन्तम् अपरिहरन्तम् । पुनः अनाशम् आशा जीविताशा तद्रहितम् । अनाशं न मृतं मुमूर्षुं वा । अजिघृक्षच्च पुनः ग्रहीतुमैच्छत् । नलो दवदहनदह्यमानं कर्कोटकम् अपश्यद् ग्रहीतुं चैषीत् । जिघृक्षः पवनाशनः । ग्रह उपादानेऽस्य सनिग्रहगुहोश्चेतीट निषेधाद्द्वित्वे सने लुङि रूपम् ॥१७॥

स च घृतनागस्तेन स्वविषेण विरूपितोऽमनागस्तेन ।
सहितोऽनागस्तेन प्रोक्तश्चात्माऽस्तु वेदनागस्ते न ॥

सः च घृतनागः तेन स्वविषेण विरूपितः मनाक् अस्तेन ।
सहितः अनागस्तेन प्रोक्तः च आत्मा अस्तु वेदनागः ते न ॥ १८ ॥

सचेति । स च नलः घृतनागो घृतसर्पः मनागस्तेन मनाक् ईषत् अस्तेन क्षिप्तेन तेन कर्कोटकेन स्वविषेण विरूपितः विरूपोऽसुन्दरः कुब्जः कृतः अनागस्तेन आगस्तेनोतीत्यागस्तो न आगस्तो अनागस्तः तादृशेन निरपराधिना । नलः किम्भूतः ? सहितः हितं प्राणरक्षणलक्षणं तेन सहितः कृतात्मरक्ष उक्तश्च किमित्याह । हे नल ते आत्मा वेदनागः पीड़ाभाक् न अस्तु न भवतु । तव मत्प्रसादात् विषवेदना माभूत् । यद्वा यतः सनागः हितः तेन हेतुना उक्तः इत्यर्थः नलः सर्पमुत्क्षिपन् तेन दष्टो विरूपोऽभवत्तेनैव च तव विषपीड़ा न भविष्यतीत्यभिहितश्चेति भावः । अत्र कथोपकथनं भारतेऽनुसन्धेयम् । यथा कर्कोटकनामा नागोऽहं नारदशापाच्चलितुमशक्तः पश्चात् स मुनिरेवमाह यदा नलो राजा त्वामितो नेष्यति तावत् त्वमचलो भूत्वाऽत्र तिष्ठ । अतस्त्वं मामितो नयस्व अहं तवोपकारोपायमपि उपदेक्ष्यामि इत्युक्त्वा समुष्टिप्रमाणोऽभूत् । नलस्तं वनाग्नेरन्यत्र निनाय । ततस्त्यक्तुकामं नलं पुनरुवाच पदानि गणयन् गच्छ ततः श्रेयः करिष्यामि । ततो नलेन एकादिक्रमेण गणयित्वा दशेत्युक्ते आज्ञाकलेन नागस्तम्

अदंशयत्। ततो नलो विरूपो बभूव। नागस्ताह जनास्त्वां न जानन्त्विति रूपमन्तर्द्धापितं यत्कृते त्वं दुःखी जातः स कलि र्मम विषेणान्तर्दग्धस्त्वां त्यक्ष्यति। अयोध्यां गच्छ बाहुकनामा सारथिरहमिति ब्रुवन् ऋतुपर्णनृपसमीपे स्थीयताम्। स तेऽक्षविजयविद्यां दत्त्वा ऽश्वविद्यां नेष्यति ततस्तव कल्याणं भविष्यति। मत्स्मरणार्थं वासोयुगं गृहाण यदा इदं वासः परिधास्यसि तदा निजरूपं प्राप्स्यसि इत्युक्त्वा नागो गत इति महाभारतवार्त्ता। वृत्तवृत्तान्तस्तनिधूताविद्धच्छिन्नेरिताः समाः। किञ्चिदीषन्मनागल्पे। यातना तीव्रवेदना। पीड़ा बाधा व्यथा दुःखम्। अनागस्तेनेति तनोतेरन्येभ्योपि दृश्यत इति ड प्रत्यये रूपम्। अस्तु अस्ते वाँटि॥ १८॥

स्यात्तरसा कल्यन्ते वपुरमुनात्तेन वाससा कल्यन्ते।
ये यशसा कल्यन्ते गुणोदयैर्दधति भूतिसाकल्यन्ते॥

स्यात् तरसा कल्यं ते वपुः अमुना आत्तेन वाससा कल्यन्ते।
ये यशसा कल्यन्ते गुणोदयैः दधति भूतिसाकल्यं ते॥१९॥

स्यादिति। कर्कोटको नलमाह हे नल अमुना आत्तेन गृहीतेन वाससा वस्त्रयुगलेन ते तव वपुः शरीरं कल्यन्ते कलिपीडापगमे तरसा वेगेन कल्यं निरामयं स्यात् भविष्यति। ये जनाः यशसा कीर्त्त्या कल्यन्ते श्रीयन्ते ते गुणोदयैः गुणानामुदयैरधिगमैः भूतिः सम्पत्तिः तत्साकल्यं पूर्णत्वं दधति धारयन्ति। ये यशस्विनस्ते गुणोदय-

वयाप्यल्पत्वा जीयन्त एवेति अतः खेदं मा कुर्विति भावः। आन्तेनेत्यत्र अन्तेनेति पाठे अध्यवसितेन ईप्सितेनेति यावत् यशसा इत्यस्य विशेषणम्। यद्वा निश्चयेन कल्यं स्यादित्यर्थः। यद्वा हे अन्तेनेति सम्बोधनं अन्ते अन्तकाले इनप्रभो हे इत्यर्थः। वार्त्तो निरामयः कल्यः। अन्तो-ऽध्यवसिते मृत्यौ स्वरूपे निश्चये ऽन्तिके। कलमदेऽस्याने-कार्थत्वाच्छ्रयणमर्थः। तस्मात् कर्म्मणि लटिरूपम्। समग्रं सकलं पूर्णम्॥ १६॥

अपिच विना मानेन श्रयणीयः सर्त्तुपर्णनामानेनः।
स्वांगेनामानेन स्तुविपदोन हि नृणां क्व नामानेन॥

अपि च विना मानेन श्रयणीयः सः ऋतुपर्णनामा अनेनः।
स्वांगेन अमा अनेन स्तुः विपदः न हि नृणां क्व नाम अनेन॥२०॥

अपीति। स एवाह हे अनेनः निष्पाप नल हे इनप्रभो मानेनाभिमानेन विनापि च ऋतुपर्णनामा ऋतुपर्णाख्यो ऽनेन स्वांगेन स्वशरीरेण अमा सह श्रयणीयो न अपि तु श्रयणीय एव। तत्र मानं न कार्य्यमिति भावः। यद्वा ऋतु-पर्णनामा इनः प्रभुः न श्रयणीय इति नेत्यर्थः। हि यतः देहिनां प्राणिनां क्व नाम कुत्र नाम विपदो न विपत्तयो न? अपि तु प्राणिनो विपदा परिभूयन्त एव। अनेनेति निर्विसर्गपाठेन विद्यते इनः यस्य यस्माद्वा स अनेनः चक्रवर्त्तित्वात् तस्य सम्बोधने हे अनेन तथा च सार्वभौम-

त्वभानं न कार्य्यमिति भावः। त्वया ऽनेन कुब्जशरीरेण समयप्रतीक्षया ऋतुपर्णं आश्रयणीयः प्राणिनां विपद्गत्यैवेति समाश्वासयदिति भावः। कलुषं वृजिनैनोघमंहो दुरितदुष्कृतम्। नामप्राकाश्यसम्भाव्यक्रोधोपक्रमकुत्सने। गर्हासमुच्चयप्रश्नशंकासम्भावनास्वपि ॥२०॥

व्रज सुखमायाहीनश्रीरित्यन्तर्हितः शमायाहीनः।
स्निग्धोमायाहीनः स्याज्जनतायाः क्वनोत्तमायाहीनः॥

व्रज सुखं आयाहि इनश्रीः इति अन्तर्हितः शमाय अहीनः।
स्निग्धः मायाहीनः स्यात् जनतायाः क्व न उत्तमायाः हि इनः ॥२१॥

व्रजेति। हे नल कथम्भूतः इनश्रीः? इनस्य सूर्य्यस्य श्रीरिव श्रीर्यस्य सूर्य्यकान्तिः अथ वा इनश्रीरिति सर्पविशेषणं युक्तञ्चैतत् नलस्य विषेण तदानीं विरूपत्वात् व्रज गच्छ उद्दिष्टऋतुपर्णसमीपमिति यावत्। किमर्थं? शमाय शान्त्यै सुखम् आयाहि आप्नुहीत्युक्त्वाऽहीनः सर्पराजो ऽन्तर्हितः। एनमेवार्थमुपोद्घातयति। हि यत उत्तमाया जनताया उत्कृष्टस्य जनसमूहस्य मायाहीनो निर्दम्भः इनः समर्थः स्निग्धो मित्रं क्व कुत्र न स्यात्? अपि तु सर्वत्रैव स्यात्। कर्कोटको नलं व्रज सुखञ्च लभस्व इत्युक्त्वा अन्तर्दधे सज्जनस्य सुहृन्मिलत्येवेति भावः। स्निग्धो वयस्यः सवयाः। इनः पत्यौनृपार्कयोरिति मेदिनी। स्यादस्तेर्विधिलिङि। जनतेति ग्रामजनबन्धुसहायेभ्यस्तल् ॥२१॥

प्रीतिवशाद्नवनतः कृत्वा तद्वसनमात्मसाद्न-वनतः। बह्वमांसाद्नवनतः सोऽस्माद्दतुपर्णमास-साद न वनतः ॥

प्रीतिवशात् अनवनतः कृत्वा तद्वसनं आत्मसात् अनवनतः ।
बह्वमांसाद्नवनतः सः अस्मात् ऋतुपर्णं आससाद न वनतः ॥२२॥

प्रीतीति। अर्थात् स नलः प्रीतिवशात् अनवनतः न नवनं स्तुतिः अनवनं तस्मात् पञ्चम्यास्तसिल् तथा च प्रीति-वशादेव तद्वस्त्रं गृहीतं न तु स्तवं कृत्वेत्यर्थः। तद्वसनं वस्त्रम् आत्मसात् कृत्वा गृहीत्वा अस्माद् वनतः अरण्यात् ऋतुपर्णं नाससाद ? अपि तु आससादैव काकर्वौ नञ् । किम्भूतात् ? न अवनं रक्षणं यस्मिन् तस्माद् रक्षाहीनाद् बह्वमांसाद्नवनतः बहुतरा ये मांसादना व्यालाः सिंह-शार्दूलराक्षसास्तेषां वनतः वन्यते सम्भज्यतेऽस्मिन्निति वनं तादृशाद् बहुक्रव्याद् सम्भक्तात् सम्भृतात् । वस्त्रमाच्छादनं वासश्चेलं वसनमंशुकम् । तदधीनवचन इति सातिः । वनषण-सम्भक्तावित्यस्य वनत इति । आससादेति सदेर्लिटि ॥२२॥

अकृत मुदा यन्तारन्तममनुत सोऽध्वनोयदायन्ता-रम्। ध्वनिसमुदायन्तारन्दधतोऽस्य हयाश्च तन्तदा-यन्तारम् ॥

अकृत मुदा यन्तारं तं अमनुत सः अध्वनः यदा अयं तारं ।
ध्वनिसमुदायं तारं दधतः अस्य हयाः च तं तदा अयन्त आरं ॥२३॥

अकृतेति । स ऋतुपर्णः तं नलं मुदा हर्षेण यन्तारं सारथिम् अकृत । सोऽयं नलङ्के यदा ऽध्वनो मार्गस्य तारं तारणम् अमनुत मेने अङ्गीकृतवान् तदा तस्मिन् काले तारमत्युच्चं ध्वनिसमुदायं ह्रेषासम्बद्धं दधतः कुर्वन्तोऽस्य ऋतुपर्णस्य हया अश्वा अरम् अतिशीघ्र मायन्त आजग्मुः । यदा ऋतुपर्णात् लब्धसारथ्यो नलो मार्गे त्वां यथेष्टं तारं यामीत्यङ्गीकृतवान् तदा ह्रेषमाणा ऋतुपर्णवाजिनो ऽतिशीघ्रं चेलुरित्यर्थः । नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः । तारोऽत्युच्चैस्त्रयस्त्रिषु इत्यमरः । अय गतावित्यस्मात्मनेपदिन आयन्त ॥ २३ ॥

अथ सहसा दमयन्त्या सा दमयन्त्यात्मशर्म निद्रा मुमुचे। जीवितसादमयन्त्या सादमयन्त्यागमकृत स च यदा तस्याः ॥

अथ सहसा दमयन्त्या सा दमयन्त्या आत्मशर्म निद्रा मुमुचे ।
जीवितसादं अयन्त्या सादमयं त्यागं अकृत सः च यदा तस्याः ॥ २४॥

अथेति । अथ नलापगमनान्तरम् आत्मशर्म स्वसुखं दमयन्त्या उपतापयन्त्या दमयन्त्या भैम्या सा निद्रा शयनं सहसा शीघ्रं मुमुचे त्यक्ता । कीदृश्या ? जीवितसादं जीवितस्य सादमवसादं विनाशम् अयन्त्या गच्छन्त्या प्राणान् जहत्येति यावत् । स च नलः सादमयं दुःखमयं त्यागं परित्यागं तस्याः दमयन्त्याः यदा यस्मिन् काले अकृत कृतवान् नले ऽपयाते वनप्रदेशे सुप्तया दमयन्त्या निद्रा

मुक्ता । कदा अयं नलः दूःखप्रचुरं तत्याग ? यदाऽकार्षीत् । दमु उपतापेऽस्य शत्रन्तस्य शतन्तस्य स्त्रीत्वे दमयन्त्येति रूपम् । साद्यते ऽवसाद्यते ऽनेनेति सादो दुःखम् । त्यजहानाविच्येतद्धात्वर्थत्वेन कण्ठोक्त एवार्थः । अकर्तेति क्सो लुङि । जीवितसादमित्यत्र धीहिंसादमिति पाठे धीहिंसाबुद्धिनाशस्तं ददातीति सः तं नलम् अयन्त्या नलः क्व गतः अहं वा क्व गच्छामि कुत्र तं पश्यामीति भावयन्त्या अयधातो र्गत्यर्थकत्वात् ज्ञानार्थकत्वमित्यर्थः ॥२४॥

साऽत्र ससादारामा सीतेव त्रासमाससादारामा ।
या प्रासादारामानुपेत्य भर्त्रा रतिं रसादारामा ॥

सा अत्र ससादा रामा सीता इव त्रासं आससाद अरामा ।
या प्रासादारामान् उपेत्य भर्त्रा रतिं रसात् आर अमा ॥ २५ ॥

सेति । अत्र भयङ्करे वने सा रामा दमयन्ती ससादा सदुःखा त्रासं भयम् आससाद प्राप्तवती । का इव ? अरामा रामरहिता सीतेव । या दमयन्ती पूर्वं प्रासादारामान् प्रासादान् नृपगृहान् आरामान् उपवनानि उपेत्य आगत्य रसात् स्नेहात् भर्त्रा नलेन अमा सह रतिं क्रीडाम् आर प्राप । प्रासादो देवभूभुजाम् । आरामः स्यादुपवनम् । सुन्दरी रमणी रामा । अमा सह समीपे चेत्यमरः ॥२५॥

तत्र पदेव्यालीनामथ विभ्रान्तं वने च देव्यालीनां ।
तद्वृन्देव्यालीनान्ततिन्दधाने तयास्पदेव्यालीनान् ॥

तत्र पदे व्यालीनां अथ विभ्रान्तं वने च देव्या अलीनाम् ।
तत्कुन्दे व्यालीनां ततिं दधाने तया आस्पदे व्यालीनाम् ॥ २६ ॥

तत्रेति । अथानन्तरं तत्र तस्मिन् अरण्ये तया देव्या दमयन्त्या च पुनः बहु विभ्रान्तं बहुविधं भ्रमितं पर्य्यटितम् नलमन्वेषयन्तीति शेषः । कीदृशे वने ? व्यालीनां सर्पिणीनां पदे स्थाने । पुनस्तत्कुन्दे व्यालीनां छन्नामासक्ताम् अलीनां भृङ्गानां ततिं समूहं दधाने धारयति । पुनः व्यालीनां वयः पक्षिणस्तेषामालीनां पङ्क्तीनामास्पदे प्रतिष्ठास्थले । आली सख्यावली अपि । षट्पदभ्रमरालयः । देवी कृताभिषेकायाम् । विभ्रान्तमित्युदितोवेतीड् विकल्पः । प्रतिष्ठास्थानमास्पदम् ॥२६॥

वेगबलापासितया वेण्या भैमी युता ललापासितया। नृपसकलापासितया हत्वारीन् बान्धवान् किलापासितया ॥

वेगबलापासितया वेण्या भैमी युता ललाप असितया ।
नृप सकलापासितया हत्वा अरीन् बान्धवान् किल आपासि तया ॥ २७ ॥

वेगेति । वेगबलेन धावनबलेन अपासितया विस्तृतया अपगता आसिता उपवेशनत्वम् अथवा असिता विद्यमानता यस्याः सा तया तुटितया असितया श्यामलया वेण्या युता सहिता भैमी दमयन्ती ललाप विललाप । किं विललापेत्याह हे नृप हे राजन् तया सकलापासितया कलापस्तूणीरः असिः खड्गः ताभ्यां सहितः सकला-

पासिः तस्य भावस्तत्ता तया करणेन । यद्वा वेगबलापासि-तया वेगञ्च बलञ्च आप्नोतीति वेगबलापः सचासिश्च वेग-बलापासिर्यस्य स तस्य भावस्तत्ता तया दृढ़खड्गवत्तया । कथम्भूतया ? सकलापासितया सकलानाम् अर्थात् शत्रू-णाम् आपासितया अपहृतखड्गतया अरीन् हत्वा बान्धवान् बन्धून् आपासि रक्षसि किलेति वार्त्ता । त्वयि खड्गधारिणि सति अन्येषां हस्तात् खड्गाः स्वयं पतन्तीति भावः । स त्वमेकाकिनीं मां वने त्यक्त्वा कथं गतोसि पुनर्नायासीति भावः । वार्त्तासम्भाव्ययोः किल । कलापो भूषणे बर्हे तूणीरे संहतेपि च ॥ आपासीति पा रक्षणे इत्यस्य लटि ॥ २७ ॥

स कथं मानवनानान्यायविदाचरसि सेव्यमान-वनानाम् । धृतसीमानवनानान्दाराणान्त्याग-मनुपमानवनानाम् ॥

सः कथं मानवनानान्यायविद् आचरसि सेव्यमानवनानाम् ।
धृतसीमानवनानां दाराणां त्यागं अनुपम अनवनानाम् ॥ २७ ॥

सेति । प्रेमकरुणादिकमनुस्मरन्ती आह । हे मानव नानान्यायवित् मनुः प्रजापतिस्तत् प्रणीतो यो नाना बहुप्रकारो न्यायो धर्म्मशास्त्रं तत् वेत्तीति तादृक् । यद्वा मानवा मनुष्यास्तेषां नानान्यायो व्यवहारस्तं वेत्तीति ज्ञातसकलधर्म्मशास्त्रमानुषव्यवहाराभिज्ञः । हे अनुपम निरुपम । स त्वम् अनवनानाम् अवनं रक्षणं तद्रहितानां

सेव्यमानवनानां सेव्यमानमाश्रीयमाणं वनमरण्यं यैस्तादृ- शानां वनमध्यगतानां श्रुतसीमानवनानां श्रुतं सीमायाः कुलमर्य्यादायाः नवनस्तवो यैस्तादृशानां दाराणां स्त्रियाः त्यागं परित्यागं कथमाचरसि करोषि ? अदुष्टभार्य्यात्यागे दोषं कथं न विचारयसीति भावः। स कथं ? मानवना- नामिति सानुस्वारपाठे । हे न्यायवित् एतस्मिन् कर्म्मणि धर्मो ऽधर्मो वेति विचारपण्डित हे । किम्भूतानां दाराणां ? मानवनानां वनं गहनं येषां तेषां मानगहनाना- मित्यर्थः । पुम्भूम्नि दाराः ॥२८॥

**परकृतमेतत्त्वेनः स्मरामि यन्न स्मृतोऽसिमेतत्त्वेन ।**
**दोषसमेतत्वेन प्रदूषये नात्र संभ्रमेतत्त्वेन ॥**

परकृतं एतत् तु एनः स्मरामि यत् न स्मृतः असि मे तत्त्वेन ।
दोषसमेतत्वेन प्रदूषये न अत्र सम्भ्रमे तत् त्वा इन ॥ २९ ॥

परेति । हे इन स्वामिन् नल यत् यस्मात् एतत् मत्परित्यागरूपमेनः पापं परकृतं परेण कलिना कृतं स्मरामि जानामि। तु पुनः त्वं मे मया तत् तस्मात् तत्त्वेन सत् स्वरूपत्वेन याथार्थ्येन न स्मृतोसि न ज्ञातोसि। अपि तु तत्त्वतो ज्ञातोसि। त्वं स्वबुद्ध्या एवं नाचरसि। अत्र संभ्रमे दुःखे दोषसमेतत्वेन सदूषणत्वेन त्वा त्वां न दूषये न दूष- यामि कलिकृते अपराधे त्वां कथं दूषयामि ? त्वं सर्व्वदा दूषणरहित इति भावः। नञ् काक्वर्थे। समौ संवेग- संभ्रमौ। दूषय इति दोषोणावित्यूत्वे रूपम् ॥२९॥

हृदयौकायस्तेन स्थीयेत यथैव पावकायस्तेन।
यावत्कायस्तेन त्यज्येत स्वहृदि चाधिकायस्तेन॥

हृदयौकाः यः ते न स्थीयेत यथा पावकायः तेन।
यावत् कायः ते न त्यज्येत स्व हृदि च अधिकायस्तेन॥ ३०॥

हृदेति। दमयन्त्यात्मानं प्रत्याह। हे स्व आत्मन् यावत् यत्कालपर्य्यन्तं ते त्वया कायः न त्यज्येत न मुच्येत तावत् यस्ते तव हृदयौकाः हृदयमोकः आश्रयो यस्य स हृदयवासी नलः तेन नलेन हृदि हृदये अधिकायस्तेन अधिकमायस्तेन व्याकुलेन न स्थीयेत अपि तु स्थातव्यमेव। किमिव? यथैव पावकायः पावकेऽग्नौ अयो लौहमिव दहनगतलौहमिव। हे आत्मन् यावत् त्वमिमं कायं न जहासि तावत् विरहानलप्रदीप्ते मत्हृदि नलः स्थास्यति। यथाग्नौ लौहमेवं तस्य मत्प्रियस्य दुःखं भवतीति त्वं शीघ्रं कायं जहीहीति भावः। स्वोज्ञातावात्मनि। स्थीयेतेति घ्रामास्थागापाजहातिसां हलीति दीर्घः। पिण्डं कालायसायसी। आयस्तेति आङ्पूर्व्वकयसुप्रयत्ने धातोः क्तः॥३०॥

यस्य पदे शङ्कमितः स्वजनोयं प्राप्य जनोपदेशङ्कमित। अरिवृन्दे शङ्कमितस्मित सत्वमुपागतोसि देशङ्कमितः॥

यस्य पदे शं कं दूतः स्वजनः अयं प्राप्य जनपदेशं कमित।
अरिवृन्दे अशङ्कमितस्मित सः त्वं उपागतः असि देशं कं दूतः॥ ३१॥

यस्येति । अयं स्वजनो बन्धुवर्गः यस्य पदे तव राज्ये यं त्वां जनपदेशं राष्ट्राधिपं प्राप्याधिगम्य शं कल्याणं कं सुखम् इतः प्राप्तवान् । हे कमित कान्त अरिवृन्दे शत्रुसमूहे अशङ्क शङ्कारहित मितस्मित मितपरिहास त्वम् इतो वनात् तं देशं कां भुवम् उपागतोसि गतवानसि । आदौ यं स्वपदेशमिति पाठे स्वपदेशं शोभनोऽपदिश्यत इत्यपदेशो नाम तादृशं शोभनाख्यं यं जनपदेशं प्राप्य स्वजनः कं सुखम् शयः शुभावहविधिम् इतः प्राप्तः । यद्वा स्वपदे स्वस्थाने स्थानान्तरम् । कथम्भूतम् ? अशम् अकल्याणम् इत्यर्थः । दमयन्ती विलपन्तीदमाह हे नल यं त्वां राज्याधिपं प्राप्यात्मीयलोकः सुखं प्राप्तवान् समान्दुःखजलधौ मज्जन्तीमुपेत्य अस्माद् वनात् कन्देशं गतवान् । पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु । शं सुखम् । कमुकान्तावित्यस्य क्ते । बन्धुस्वस्वजनाः समाः । स्वोज्ञातावात्मनि स्वस्त्रिष्वात्मीये स्वोस्त्रियात्मधने । स्वपद इति निमित्तसप्तमी ॥३१॥

यद्यशसानुकरोदः कुहरं योद्विषुरञ्जसा नुकरोदः । अद्रेः सानु करोदः किमाप दयितोम-मेति सानुकरोद ॥

यद्यशसा अनुरु रोदःकुहरं यः द्विषुः अञ्जसा नुः उरोदः ।
अद्रेः सानु करो अदः किं आप दयितः मम इति सा अनुरुरोद ॥ ३२ ॥

यदिति । हे करो हे चित्रखग यद्यशसा यस्य कीर्त्या

रोदः कुहरं द्यावा भूम्यन्तरं एकोक्त्या रोदः शब्दः सान्तः स्वर्गभूमिवाची तयोः कुहरं विवरम् अनुरु अविपुलम् अल्पं छतम् अपमानितमिति भावः । यस्य द्वेष्टुः द्वेषं कुर्वतो नुः पुरुषस्य अञ्जसा झटिति उरोदः उरोवक्षो द्यति खण्डयतीति तादृक् द्विषद्वक्षोविदारणशरवर्षीत्यर्थः । स मम दयितो वल्लभो नलो ऽद्रेोऽद्रेः सानु गिरेः समभूभागं किम् आप प्राप्तवान् ? इत्युक्त्वा ऽनुरुरोद पश्चात् अरोदत् । वने दमयन्ती मृगं पृच्छति वने चरन् चीणः यत् कीर्त्त्या द्यावा भूमीपूरिते । यस्य द्विषद्वनदावानलः किङ्गिरिसानुं प्राप्तवानित्युक्त्वा रुरोद । वड्रोरुविपुलम् । द्यावाभूमी च रोदसी । पुरुषाः पूरुषा नरः । स्नुः प्रस्थः सानुरस्त्रियौ । उरोद इति उरोद्यतीति दो अवखण्डनेधातोरातोऽनुपसर्गे क इति कः । कृष्णसाररुरन्यंकुरङ्कुशंवररोहिषाः आपेत्यापे-र्लिटि । पश्चात् सादृश्ययोरनु । रुरोदेति रुदिर् अश्रु-विमोचन इत्यस्य लिटि ॥ ३२ ॥

अयकलनामानन्तेत्ययज्ञनोददति चाङ्गनामा-नन्ते। हार्दं नामानन्ते जनमेनमशोककुरु सना-मानन्ते ॥

अय कलनां आनन्त इति अयं जनः ददति च आङ्गनाः मानं ते ।
हार्दं नाम अनन्ते जनं एनं अशोककुरु सनामानं ते ॥ ३३ ॥

अयेति । दमयन्त्यशोकमुपगम्याह । हे अशोकस्त्वं अयं जनो मल्लक्षण आनन्त प्रणमतीति कलनाम्बुद्धिं पूजां

चाश्रय आश्रय गृहाण। अङ्गनाः स्त्रियस्व ते तव मानं पूजां दोहदं वा ददति ददते। स्त्रीसंस्पर्शात् तव पुष्पोत्पत्तिरिति भावः। नामसम्भावनायाम्। अतो अनन्ते बहुतरे हार्द्दे प्रेमणि सति एनं जनं ते तव सनामानं सनामाख्यम् अशोकं शोकरहितं कुरु। हृदः कर्म्महार्द्दम्। हायनान्तयुवादिभ्योऽणित्यण्। हे अशोक त्वां नौमि मामपि शोकरहितं कुर्व्विति भावः॥ ३३॥

उच्चशिरोदारावालप्येति वने सुबन्धुरोदारावा। द्रुतिमकरोदारावारुच्चं मरुतलमथो सरोदारावा॥

उच्चशिरोदारौ आलप्य इति वने सुबन्धुरा उदारावा।
द्रुतिं अकरोत् आर अवाः रुच्चं मरुतलं अथो सरोदारावा॥ ३४॥

उच्चेति। सुबन्धुरा अत्यन्तसुन्दरी उदारा वा उदारा आवा गतिर्यस्याः तादृशी दमयन्ती। उच्चशिरोदारौ उच्चशिरसो दारवो देवदारुद्रुमा यस्मिन् तादृशे वने इति पूर्व्वोक्तमालप्याभाष्य विलप्य वाद्रुतिं वेगम् अकरोत् गतिं वा। यद्वा उच्चशिरा उच्चग्रीवा उदारावा उत् ऊर्द्धम् आरावः शब्दो यस्याः सा उच्चस्वरा उच्चैः विलप्येति यावत्। यद्वा एवार्थे वा शब्दः उदारा दक्षिणा। उदारो दातृमहतो र्दक्षिणेप्यभिधेयवत् इति मेदिनीकरः। अस्ति चादन्तोपि शिरशब्दः पिण्डं दद्यान्नयाशिरे इति दर्शनादित्यर्थः। अथो वेगकरणानन्तरं स रोदारावा। रोदन-

शब्दसहिता रुदन्ती रुक्षं शुष्कम् अवाः जलहीनं न विद्यते वाः जलं यस्मिन् तादृशं मरुतलं मरुदेशम् आर गतवती । क्वचिदतिसुन्दरे वने विलप्य दमयन्ती निर्जलं मरुदेशं गतवती रुदतीति भावः । दारुशब्दस्य वृक्षे वृक्षत्वप्रवृत्तिनिमित्तत्वाद् भाषितपुंस्कत्वेन तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्येति पुंवद्भावात् घेरात्वादि । वृक्षत्वप्रवृत्तिनिमित्तत्वे चास्य पुंस्त्वाश्रयणात् । भद्रदारुद्रुकिलिमं पीतदारु च दारु चेत्यमरः । वागतिगन्धनयोरित्यस्यावेति । वा समुच्चय एवार्थे इति हेमः । ऋगतावित्यस्यारेतिच ॥ ३४ ॥

मृगकुलमारव्याधिप्रचुरं विभ्रद्वनं समारव्याधि ।
वीथ्या मारव्याधिष्ठितभुजगम्भीमजेयमारव्याधि ॥

मृगकुलं आरवि आधिप्रचुरं विभ्रत् वनं समारव्याधि ।
वीथ्या मारव्या अधिष्ठितभुजगं भीमजा इयं आर व्याधि ॥ ३५ ॥

मृगेति । इयं भीमजा दमयन्ती मारव्या मारोरियं मारवी तया वीथ्या मार्गेण समारव्याधि मारस्य कामस्य व्याधिः मारव्याधिः तत्सहितम् आरवि सशब्दम् । यद्वा आरवि आराः इतस्ततो जङ्गमा वयः पक्षिणो यत्र तत् । आधिप्रचुरं मानसीव्यथाबहुलं मृगकुलं विभ्रद् धारयद् वनम् आर गतवती । कीदृशं वनम् ? व्याधिव्याधो लुब्धकस्तत्सहितम् अधिष्ठितभुजगम् अधिष्ठिताः भुजगाः सर्पा यस्मिन् तत् । समारव्याधिरिति सविसर्गपाठे दमयन्ती-

विशेषणम् । पुंस्याधिर्मानसीव्यथा स्त्रीरुग्रुजाचोपताप-रोगव्याधिगदामयाः । आरेति ऋगताविल्यस्य लिटि । वीथ्यालिरावलिः पङ्क्तिः श्रेणी लेखास्तु राजयः । वीथी-पद्व्यपीत्यमरः ॥ ३५ ॥

साश्रवनासारासावेगमना भीमनन्दनासारासा ।
सुनयननासारासावजगरमग्रासिचासुनासारासा ॥

साश्रवनासारा सावेगमनाः भीमनन्दना सारासा ।
सुनयननासा आर असौ अजगरं अग्रासि च असुना सारा सा ॥ ३६ ॥

साश्रेति । साश्रवनासारा अश्रवनम् अश्रुजलं तस्या सारो वेगवर्षणं तत्सहिता सा वेगमना आवेग उद्वेगः तत्सहितं मनो यस्या स्तादृशी सारसा आरासो रोदनरव स्तत्सहिता । यद्वा असारासा असारः अस्थिरः आस उपवेशनं स्थिति र्वा यस्याः सा भावे घञ् । असौ भीम-नन्दना दमयन्ती अजगरं सर्पम् आर प्राप्तवती । असुना चाजगरेण सारा श्रेष्ठा सा दमयन्ती अग्रासि ग्रस्ता । कीदृशी ? सुनयननासा नयनं च नासा च नयननासं शोभनं नयननासं यस्याः सा तादृशी सुनेत्रनासिकेति यावत् । मरुतलमटन्ती दमयन्ती अजगरम् अद्राक्षीत् तेन चाज-गरेण सुमुखी कवलिता इति भावः । वनं सलिलकानने । आसारो वेगवर्षणम् । नन्दिग्रहिपचादिभ्यो ल्युणि न्यच इति ल्योनन्दनेति । द्वंद्वश्च प्राणितूर्य्यसेनाङ्गानामिति नयननासमित्येकवद्भावः । आरेति ऋगताविल्यस्य लिटि ।

अजगरेशयुर्वाहस इत्युभौ। ग्रसुग्लसु अदने लुङि चिण्वृद्धौ अग्रासीति। असुनेतामसुरोदनं चासमसु च। सारो बले स्थिरांशे च न्याय्ये क्लीबे वरे त्रिषु॥ ३६॥

अथशवरोहास्यन्तं साहं स्तदसूं श्च रिपुतरोहास्यन्तम्। समधिरुरोहास्यन्तं न्यस्य तदास्येऽकरोत् खरोहास्यन्तम्॥

अथ शवरः हास्यन्तं स्वासून् तदसून् च रिपुतरोहा असन्तम्। समधिरुरोह असन्तं न्यस्य तदास्ये अकरोत् खरः हास्यं तम्॥ ३७॥

अथेति। अथाजगरग्रसनानन्तरं रिपुतरोहा रिपूणां तरो बलं हन्तीति रिपुतरोहा शत्रुबलघातकः शवरः किरातः स्वासून् स्वप्राणान् हास्यन्तं जिहासतम्। तदसूंश्च तस्या दमयन्त्या असून् प्राणान् स्यन्तं विनाशन्तम् अजगरं समधिरुरोह आरूढवान्। तं हास्यं हासयोग्यम् अकरोत् अकार्षीत्। किं कृत्वा तदास्ये तस्याजगरस्यास्ये मुखे असन्तं खड्गाग्रं न्यस्य निक्षिप्य। शवरः किम्भूतः? खरस्तीक्ष्णस्वभावः। शवरो दमयन्तीप्राणान् विनाशयन्तं मारयिष्यन्तं तमजगरं खड्गाग्रभिन्नमुखम् अमारयदित्यर्थः। रिपुतरोहेति ब्रह्मभ्रूणवृत्रेषु क्विबिति सूत्रेण ब्रह्मादिष्वेव हन्तेः प्रयोगाच्चिन्त्यमिदम्। यद्वा शवरः कथम्भूतः? रिपुतरः। हा इति कृत्वा। हा विषादे च शोके च कुत्साद्दुःखार्थयोरपीति मेदिनी। हास्यन्तमिति। ओहाक्त्यागे ऽतोऽटः शत्रेति-

यता। पुंसिभूम्न्यसवः प्राणाः। तरस्वी बलरंहसी। येंतकर्म्मणीत्यस्य स्यन्तमिति। समधिकरोहेति लिटि। हास्यमिति। तदर्हतीति यः ॥३७॥

ताम्पुनरेकामयतः कृशां किरातः स्मरातिरेकामयतः। कान्तारेकामयत स्त्रियं न काङ्क्षे दुपह्वरेकामयतः ॥

तां पुनः एकां अयतः कृशां किरातः स्मरातिरेकामयतः।
कान्तारे अकामयतः स्त्रियं न काङ्क्षेत् उपह्वरे कामयतः ॥ ३८ ॥

तामिति। तां दमयन्तीम् एकाम् एकाकिनीं सहायरहिताम् अयतः शुभदैवात् कृशां तनुं दैववशात् दुर्बलामित्यर्थः। स्मरातिरेकामयतः स्मरस्य कन्दर्पस्यातिरेकम् आधिक्यं स एवामयो व्याधिस्तस्मात् कन्दर्पाधिक्यव्याधेर्हेतोः किरातः कान्तारे महावने अकामयत अचीकमत् स्त्रीत्वेनेति शेषः त्वं मम भार्य्या भवेति कामनाम् अकरोदिति भावः। अत्र हेतुमाह कामयतः कामेन यतः संयतः। कामातुरः उपह्वरे रहसि स्त्रियं न आकाङ्क्षेत् न इच्छेत् किं? नञ्काक्वर्थः! अपि काङ्क्षेदेव। उपह्वरं रहसि सन्निधौ इति हेमचन्द्रः ॥३८॥

ऋतवनमह्यान्तेन जातासि मया ननु त्वमह्यान्तेन।
मानिनि मह्यान्तेन प्रसीद शरणागताः क महान्तेन ॥

ऋतवनमह्यान्तेन जाता असि मया ननु त्वं अह्यान्तेन।
मानिनि मह्यं तेन प्रसीद शरणागताः क महान्ते न ॥३९॥

इतेति। शबरो भैमीमाह। ननु भो मानिनि दमयन्ति इतवनमध्यान्तेन इतः श्रितो वनमध्यान्तो वनभूमिप्रान्तं येन तादृशेन अद्य तेन सर्पनाशकेन मया त्वं त्रातासि रक्षितासि। तेन हेतुना मह्यं प्रसीद प्रसन्ना भव। शरणाय आत्मत्राणाय आगताः प्राप्ता जनाः क कुत न मह्यंते न पूज्यंते। हे दमयन्ति अजगरं विनाश्य मया रक्षितासि। अथ शरणागताय मे प्रसीद। मह्यन्त इति। मह्पूजायामित्यस्य कर्म्मणि लटि। शरणं गृहरक्षित्रोरित्यमरः। नन्वाक्षेपे परिप्रश्ने प्रत्युक्तावधारणे। वाक्यारम्भेप्यनुनया मन्त्रणानुज्ञयोरपीति हेमः। अन्तः स्वरूपे निकटे प्रान्ते निश्चयनाशयोः। अवयवेपीति हेमः॥ ३९॥

सुसुखनिशापे ते नः स्मर दासानिति प्रोच्य वशापेतेन।
दत्ते शापे तेन स्थितयासान्त्वेन चलदृशा पेते न॥

सुसुखनिशापे ते नः स्मर दासान् इति प्रोच्य वशापेतेन।
दत्ते शापे तेन स्थितया असान्त्वेन चलदृशा पेते न॥ ४०॥

सुसुखेति। हे सुसुखनिशापे सुशोभनं मुखं सुमुखं तदेव निशापः चन्द्र इव यस्याः सा सुमुखनिशापा तस्याः संबोधने हे शोभनमुखचन्द्रे ते तव नोऽस्मान् दासान् स्मर जानीहि। इत्यनेन प्रकारेण प्रोच्य उक्त्वा ऽसान्त्वेन क्रोधेन स्थितया चलदृशा चञ्चलाक्ष्या शापे दत्ते वशापेतेन वशा-

मेदस्तया ऽपेतेन हीनेन सता मदनज्वलनदह्यमानमेदसा तेन शबरेण किन्नपेते अपि तु मूर्च्छितमेव । नञ्काकार्थः । क्रुद्धया दमयन्त्या शापे दत्ते शबरोमूर्च्छितो ऽभूदिति भावः । सुमुखि विशापे तेनेति पाठे हे शोभनसुखि ते तव नः अस्मान् दासान् स्मरेति विशापे शापाभावे शापपूर्व्वमित्यर्थः मोचयतेन न पतितमिति काकुः । हृन्मेदस्तु वपावसा । सामसान्त्वसुभे समे । पेते इति पततेः कर्म्मणि लिटि ॥४०॥

दग्धसरागाहितयादमयन्त्याविपिनभूःपरागाहितया । उच्चतरागाहितया दृष्ट्या घोरा च कन्दरागाहितया ॥

दग्धसरागाहितया दमयन्त्या विपिनभूः परा अगाहि तया ।
उच्चतरागाहितया दृष्ट्या घोरा च कन्दरा अगाहि तया ॥ ४१ ॥

दग्धेति । दग्धसरागाहितया दग्धः सरागः सकामो ऽहितः शत्रुः शबरो यया सा तादृश्या तया दयमन्त्या ऽपरा ऽन्या विपिनभू र्वनभूमिरगाहि अवगाहिता । उच्चतरागाहितया उच्चतरा ये अगा वृक्षा स्तेष्वाहितया आरोपितया दृशा च घोरा भयावहा कन्दरादरी अगाहि । कन्दरागा हितयेत्येकं पदं वा । कन्दरायुक्ताद्रौ आहितया क्षिप्तये-त्यर्थः । अत्र पक्षे घोरेति भूविशेषणम् । यद्वा परागाहितया पुष्पधूलिव्याप्तया दृशा वनभूः अगाहि विलोडितेत्यर्थः । दग्धं शबरया तया भैम्या अन्या ऽटवी अवगाहिता घोरा

कंदरा चादर्शि इति भावः । गाह अवगाहने स्वामुडि चिघि ॥ ४१ ॥

पदवा पदवा पदवा पदवारयतोद्रिवनं विललाप च सा । तरसान्तरसान्तर सान्तर सान्वयदुःख वृणीष्व सखे मरणम् ॥

पदवा अपदवापद् अवापद् अवार् अयतः अद्रिवनं विललाप च सा । तरसा अन्तर सान्तरसान्तर सान्वयदुःख वृणीष्व सखे मरणं ॥ ४२ ॥

पदवेति । अयतः शुभदैवात् पदवा पदाभ्यां वातीति पदवा सा दमयन्ती अपदवापत् । अपगता दवापत् दवाग्नि-जन्यदुःखं यस्मात् तं तादृशमद्रिवनं पर्वतवनम् अवापत् लेभे । रयतो वेगादवापदिति वा । कीदृशम् ? अवाः न विद्यते वा जलं यस्मिन् तत् जलरहितं विललाप च पर्यदेवीच्च । हे सान्तरसान्तर । सान्तम् अन्तरसहितं रसान्तरं करुणा-तिरिक्तं रसो यस्मात् तादृशम् । हे सान्वयदुःख अन्वयः सन्तान स्तत् सहितं दुःखं यस्मिन् तादृशम् । सान्तर-दुःख इतिपाठे अन्तःकरणदुःखसहित हे । हे अन्तर आत्मन् सखे मितर सा वेगेन मरणं वृणीष्व वरय । पदचारिणी दमयन्ती दवविपद्रहितं जलशून्यं गिरि-वनगता विलापं चाकार्षीत् । हे आत्मन् सपरिवार-दुःखाकुल । मरणमिदानीं वरय । साम्प्रतं कियत् सहे मम मरणमेव वरमिति भावः । अवापदिति आपेर्लुङि-

त्वादृक्। रप लप जल्प व्यक्तायां वा चीत्यस्य लिटि ललापेति। अन्तरम् अवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये। छिद्रात्मीयविना वहिरवसरमध्येऽन्तरात्मनि चेत्यमरः ॥४२॥

वृक कोपपुरःसरमा सरमा सरमा सरमा भवता ननु सा। किमृते दयितादयतोदयतोदयतोदयतोऽस्ति ममेह सुखम् ॥

वृक कोपपुरःसरं आसर मा सर मा सरमा भवता ननु सा।
किं ऋते दयितात् अयतोदयतोदयतः अदयतः अस्ति मम इह सुखं ॥ ४३ ॥

वृकेति। वने गच्छन्ती कंदरातो निःसृतं व्यात्तमुखं वृकं दृष्ट्वाह। हे वृक तरक्षो कोपपुरस्सरं क्रोधपूर्व्वकं मा माम् आसर आगच्छ मान्भक्षयेत्यर्थः। मा सर दूतो मा गच्छ। ननु भोः सा तव स्त्री वृकी भवता त्वया सरमा सलक्ष्मीका भवतु तयाच मां भक्ष्य स्वस्त्रिया सह स्थीयतामिति भावः। यद्वा सासरमा श्वापदत्वात् शुनी तव स्त्री त्वया सरमाभवत्वितिशेषः। अतो मा सर अन्यत्र मा गम्यतां मामेव भक्षयेत्यर्थः। अयतोदयतोदयतः अयं शुभदैवं तस्य तोदः चेपस्तत्र यतो रत उदयो ऽभ्युदयो वा यस्य तादृशात्। अदयतः निष्करुणाद् दयितात् स्वीयात् नलाद् ऋते विना इहावसरे मम किं सुखमस्ति स्वास्थ्यमस्ति। यत्तु हे अयतोदयतेति भिन्नम्पदं अयोदैवं तेन या पीड़ा तया यतः बद्धः दैवपीड़ित उदयत उद्गच्छतः। अपरं तथैवेति श्रेयम्। यद्वा हे वृक कोप-

पुरःसरं मा सर स्वग्टहात् मा गच्छ आसर परावृत्त्य आगच्छ सा तव स्त्री सरमा सलक्ष्मीका भवत्वित्यर्थः। तया च क्रुद्धः सन् गृहात् मा गच्छेति भावः। दमयन्ती वृकमाह हे वृक त्वं माम् आसर नलादृच्छते मम किं सुखं जीवितेन वा किं प्रयोजनम्? अतो मां भक्षयित्वा स्वस्त्रिया सहैव स्वीयतां मा विरही भवेति तात्पर्य्यार्थः। तरक्षुस्तु मृगादनः वृकोपि। आसरेति सर्त्तेर्लोटि। माशब्दोऽयन्नमाङ्। सरमा शुनी। प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु। पृथग्विनान्तरेणर्त्ते हिरुक् नाना च वर्जने ॥४३॥

अयि राक्षस भक्षय मां क्षुधितोन वसान वसानवसानवसाः। रुजमुज्झ जनेत्र च हे करुणान्तरदान्तरदान्तरदाम् ॥

अयि राक्षस भक्षय मां क्षुधितः न वस अनवसान वसान वसाः।
रुजं उज्झ जने अत्र च हे करुणान्तरदान्तरदान्तरद अन्तर् अदां ॥ ४४ ॥

अयीति। भैमी राक्षसं दृष्ट्वाह। अयि अहो राक्षसं वसाः मेदांसि वसानाच्छादय अनवसानमरणहीनक्षुधितो वुभुक्षितस्त्वं न वस न तिष्ठ मां भक्षय। अत्र च जने मल्लक्षणे करुणान्तरदान्तरदान्तरद करुणान्तरं करुणावकाशस्तेन दान्तम् उपशान्तं रदान्तरं दन्तान्तरं ददातीति तादृक्। करुणा हीन रदनान्तरप्रदायक रुजं पीड़ाम् उज्झ त्यज मयि पीड़ां त्यज। अहम् अन्तः हृदयम् अदां दत्तवती। यद्वा करुणां तर स्तर महि-

षये दयां त्यजेत्यर्थः। हे दान्तरदान्तरद दान्तः समर्थः रदोदन्तः तस्मान्तरेण द्यति खण्डयति स। हे राक्षस मयि स्त्री अवध्येति रजं त्यक्त्वा मां भक्षय तुभ्यमहं शरीरं दत्तवतीत्यवोचदिति भावः। अदामितिददाते र्लुङि। यदपि वहे: करुणान्तरदान्तरदान्तरदान्तरद इति पाठः। आन्तरं चित्तं द्यति खण्डयति तां रजं त्यज। त्वमत्र जने करुणां वहेः। हे रदान्तद दन्तान्तरप्रद। दान्तं संसारं तर इति तदर्थः॥ ४४॥

**करमाकरमाकरमाकरमाकलय व्यसनं मम पाहि हरे। दरतोदरतोदरतोदरतोविरुतैर्मरुतां सुकरत्वमपि॥**

क रमाकर माकरं आकरं आकलय व्यसनं मम पाहि हरे।
दरतः अदरतोदरतोदरतः विरुतैः मरुतां सुकर त्वं अपि॥ ४५॥

करमेति। हे रमाकर लक्ष्मीप्रद। कं ब्रह्मन् मम व्यसनं विपदं माकरम् आकरं मकराणामयं माकरस्तादृशमाकरं खनिम् आकलय मम शोकं समुद्रं जानीहि। मरुतां देवानां सुकर अकष्टकर हे हरे कृष्ण नामोच्चारणेन हरति पातकानि इति हरिः तस्य सम्बोधनं त्वमपि अदरतोदरतोदरतः अदरो ऽनल्पो यस्तोदोदुःखं तत्र रतम् उदरमभ्यंतरं यस्य तादृशात् दरतो भयात् विरुतै राक्षासनवचनैः पाहि रक्ष। यद्वा शं सुखं रमा लक्ष्मी स्तयोराकरः उत्पत्तिभूमिः स चासौ माकरः शोभाकरश्च तत् सम्बोधनं माकरं मकरसम्बन्धि समुद्रसदृशम् मा लक्ष्मीः

तस्याः आकरः उत्पत्तिस्थानं समुद्रमिवेति वार्थः। हे ब्रह्मन् मम शोकः समुद्र इव प्रवृद्धः। देवभयापहारिन् हे कृष्ण त्वमपीदृशे कष्टे मामाश्वास वाग्भिः रक्षेत्याहेति भावः। मारुते वेधसि ब्रध्ने पुंसि कः। खनिः स्त्रियामाकरः स्यात्। एकत्र करोतीत्याकरः। कृदोरप्। व्यसनं विपदि भ्रंशे दोषे कामजकोपजे। पाहीति पारक्षणेऽस्य लोटि। सुकरेति ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्। दरोऽस्त्रियाम्भये श्वभ्रे। एवं कस्य ब्रह्मणो रमाकर लोकाधिपत्यकर हरे सुकर शोभनहस्त। दरतोदरतोदरतः दरो भयं तस्य तोदो नाशस्तत्र रतमुदरं यस्य तस्य दरतः शंखस्य। मरुतां वायूनां विरतै मां पाहि रक्षेति ध्येयम्॥ ४५॥

त्वदरिर्निषधेश समृद्धिमनारमयारमयारमयारमयाः। व्यसनन्त्वमुपैमि कदा नु सभीशमना शमनाशमनाशमनाः॥

त्वदरिः निषधेश समृद्धिं अनारमया रमया आर मया अरं अयाः।
व्यसनं त्वं उपैसि कदा नु सभीशमना शं अनाशं अनाशमनाः॥ ४६॥

त्वदरिरिति। हे निषधेश नल त्वदरिः पुष्करः अनारमया अनवसानया रमया लक्ष्म्या रमण्या वा समृद्धिं हर्षमार प्राप्तवान्। त्वं मया सह अरं शीघ्रं व्यसनं विपत्तिम् अयाः गतवानसि। अनाशमनाः आशेच्छा तद्रहितं मनो यस्यास्तादृशी। यद्वा त्वदरिः कथम्भूतः? अनाशमनाः न विद्यते नाशे विनाशे मनो यस्य स तथे-

त्यर्थः । सभीश्मना भीर्भयं तच्छमनं शान्तिस्तत् सहिता शांतभीतिः । अनाशं नाशरहितं शं सुखं कदा उपैमि कस्मिन् काले उपगच्छामि । नु इच्छायाम् । कदा सुखं लप्स्ये इति व्यलपत् । यातेर्लङिझयाः । उपैमीतीणः विभाषा कदा कर्ह्योरिति भविष्यति लट् । नु इच्छायां विकल्पे च ॥ ४६ ॥

यमनायमनायमनायमनागभिवीक्ष्य रतन्द्रवतीह परः । सरुषोनिषधक्षितिनाथ गलन्नवमानवमानवमानवमाः ॥

यं अनायमनाः यमनाय मनाक् अभिवीक्ष्य रतं द्रवति इह परः । सः रुषः निषधक्षितिनाथ गलन्नवमानवमान वम अनवमाः ॥ ४७ ॥

यमनेति । अनायमना अनीतिमना अनीतियुक्तः नय एव नायः अन्यायपर इत्यर्थः । यद्वा आयो धनागमस्तद्रहितमनाः सन् परः शत्रुर्मनागीषत् यमनाय जीवापहारणाय रतमासक्तं यं त्वां वीक्ष्येह लोके परः शत्रु द्रवति दूरादेव पलायते । हे निषधक्षितिनाथ निषधेश नल गलन्नवमानवमान गलन् स्खलन् नवमानवाः तरुणास्तेषां मानो गर्वो यस्मिन् तादृक् सत्वम् अनवमाः अवमाः अधमाः न अवमाः अनवमाः श्रेष्ठाः रुषः क्रोधान् वम उद्गिर । हे नल यं त्वां कृतानीतिः शत्रु र्हन्तुमुद्यतमीषदप्यालक्ष्य पलायते स त्वं परहृतसर्वस्वः ता गिरः कथं नोद्गिरसि ? वने वने किमटसीति भावः । किञ्चि-

दीषन्मनागल्पे। द्रुगताविल्यस्य लटि द्रवतीति। रुट्-क्रुधौ स्त्रियौ। टुवमउद्गिरणे ऽस्मान्नोटि उद्गिरेति।
निकृष्टप्रतिकृष्टार्थरेफयाप्यावमाधमाः ॥४७॥

नयमानयमानयमानयमावसएत्यनिवाससमुम्भवता।
भवनीयमपायमरीनुदयान्नयतानयतानयतानयता॥

नयमानयमान् अयमान यं आवसः एत्य निवासं अमुं भवता।
भवनीयं अपायं अरीन् उदयान् नयता अनयतानयतान् अयता ॥ ४८ ॥

नयमेति। नयमानयमान् नयो नीति र्मानोऽभिमानो यमो विश्रमो नियमो वा तान्। अयमानः प्राप्नुवान् तस्य सम्बोधने हे नयमानयमानयमान नीतिमभिमानं नियमञ्च धारयन्। यं निवासं राष्ट्रमेत्य प्राप्य आवसः यस्मिन् राष्ट्रे ऽतिष्ठः। अमुं निवासम् अयता प्राप्नवता उदयानुन्नतो ऽयो ज्ञानं येषां तादृशान् अनयतानयतान् अनयो ऽन्यायः तस्य तानो विस्तारस्तत्र यतान् अन्यायासक्तान् अरीन् शत्रूनपायं नाशं नयता प्रापयता भवता त्वया भवनीयं भवितव्यम्। हे नल यन्निजराज्यं प्राप्य पूर्व्वमास्थाः पुनस्तदेव राज्यं गच्छता त्वया शत्रून् विनाशयितुं समर्थेन भवितव्यमिति तदेव निजपुरं गच्छति व्यलपदिति भावः। आवस इत्यस्याधारस्य निवासमित्यस्योपन्वध्याङ्-वस इति कर्म्मत्वम् ॥४८॥

सनयासनयासनयासनयाह्यसुहृद्वटया विपदं स्वपदम्।
हितदेहितदेहितदेहितदेत्यलपद्बहुधा नरदेवसुता॥

सनयासनया सनया सः न याहि असुहृद्वटया विपदं स्वपदं।
हितद ईहितदेहि तद् एहि तदृइति अलपत् बहुधा नरदेवसुता॥४८॥

सनयेति। हे हितद हितमीप्सितं वस्तु ददातीति हितद नल स त्वं सनयासनया नयो नीतिस्तस्या असनं त्यागस्तत् सहितया त्यक्तनीत्या असुहृद्वटया शत्रुकारिसमूहेन विपदं नाथं न याहि मा गमः। ईहितदेहि ईहिता इष्टा उपकर्त्तारो देहिनो जना यस्मिन् तादृशं तत्स्वपदं स्वनगरमेहि आयाहि। इत्यनेन प्रकारेण सनया नीतिसहिता नरदेवसुता भीमभूपपुत्री बहुधा बहुप्रकारं व्यलपत् विललाप। यद्वा हितदेहितदेहीत्येकं पदं हितदम् ईहितं चेष्टितं येषां ते तादृशा देहिनो यत्र तत् स्वपदं राज्यमेहि। हे नल एवमेकाकी शत्रुहस्तं मा गच्छः। शत्रव एकाकिनं त्वां दृष्ट्वा ऽपकुर्युस्तस्मात् स्वकीयमेव नगरं गच्छेति नानाशंकाकुला भैमी तस्मिन् वने विललापेति भावः। करिणां घटनाघटा। या प्रापणे ऽस्य लोटि याहीति। पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु। एहीतीणोलोटि। अलपदिति लपव्यक्तायां वाचीत्यस्य लङि। बहुधा संख्यायाविधार्थे धा। सप्तभिः कुलकम्॥ ४८॥

सा विधराधावन्तं रत्नौघं क्वापि निरपराधावन्तं।
सार्थं राधावन्तं प्रैक्षिष्टापच्च सुतनु राधावन्तं॥

सा विधुरा धावन्तं रत्नौघं क्वापि निरपराधा अवन्तं।
सार्थं राधावन्तं प्रैक्षिष्ट आपत् च सुतनुः आधौ अन्तं ॥ ५० ॥

सेति। विधुरा विरहिता सुतनुः शोभनाङ्गी सा दमयन्ती निरपराधा ऽपराधरहिता क्वापि कस्मिन्नपि देशे रत्नौघं रत्नसमूहम् अवन्तं रक्षन्तं सरत्नसमूहं राधावन्तं राधा समृद्धिस्तत् सहितं धावन्तं गच्छन्तं सार्थं जनसमूहं प्रैक्षिष्ट दृष्टवती। आधौ मनःपीड़ाया अन्तम् अवसानञ्च प्रापल्लेभे। वने ऽटंती सार्थमासाद्य मनःपीडां जहाविति भावः। धावुगतिशुद्ध्योरित्यस्य धावन्तमिति। राधसाधसंसिद्धावित्यस्य षिद्भिदादिभ्यो ऽङित्यङि राधेति। प्रैक्षिष्टेतीक्षदर्शनाङ्कनयोरित्यस्य लङि। आपेर्लुङि आपदिति। संघसार्थौ तु जन्तुभिः। पुंस्याधि र्मानसी व्यथा॥ ५०॥

व्याकुलयेवारितयाविधेर्गतिरनेन सिद्धयेवारि तया।
अपिच ययेवारितया यथा शफर्य्या जलोच्चये वारि तया॥

व्याकुलया इव अरितया विधेः गतिः अनेन सिद्धये अवारि तया।
अपि च ययेवारितया यथा शफर्य्या जलोच्चये वारितया ॥ ५१ ॥

व्याकुलेति। विधे दैवस्यारितया शत्रुत्वेन व्याकुलया इव अतापि विधाता शत्रु रभूदिति उद्भ्रान्तयेव तया दम-

यन्त्या सिद्धये नलान्वेषणरूपकार्य्यस्य भीमपुरप्राप्तये वा अनेन सार्थेन सह गति र्गमनमवारि भेजे वृता वा। वारितया का त्वं? कुत्र यासि? इति। निवारितयापि च यये गतम्। कया? यथा वारितया वाः जलमितया प्राप्तया शफर्य्या जलोच्चये जलवृद्धौ यथा। जनोच्चये इति पाठे जनसंघे तया यये इत्यर्थः। अवारितया इत्यकारप्रश्लेषे अनिषिद्धयेत्यर्थः। अवाः जलरहितं निर्जलमितया शफर्य्यैव। अहमपि भवत्सङ्गे समेष्यामीत्युक्त्वा निषिद्धयापि भैम्या गतमिति भावः। भार्य्यं स्त्रीनियति र्विधिः। वृञ संभक्ताविव्यस्य लुङि चिण्यवारीति। या प्रापणे इत्यस्य भावे लिटि यये। वा र्वारि सलिलं कमलं जलमित्यमरः। अत्रेयं भारतवार्त्ता। तत्र वने गच्छन्तं वणिक्सार्थं सा ददर्श। तांश्च दृष्ट्वा तेषां मध्ये कश्चित् शुचिनामा वणिक् का त्वं? कस्यासि क्व यासि? इत्याह। ततस्तया भीतया स्ववृत्तान्तं कथितं कुत्रापि भवद्भि र्नलो दृष्ट इति पृष्टाः। न वयं नलं विद्म इत्यूचुः। ततः क्व यास्यथ? इत्युक्ताः सुबाहुनाम्नश्चेदिराजस्य देशे वाणिज्यार्थं यास्यामः इत्यूचुः। ततः तैः सार्द्धं सापि ययौ इति॥ ५१॥

प्रतिषिद्धान्यायस्य प्रापि सुबाहोश्च राजधान्या यस्य। बहुधनधान्या यस्य प्रबभुर्वृन्दानि बहुविधान्यायस्य॥

प्रतिषिद्धान्यायस्य प्रापि सुबाहोः च राजधानी आयस्य ।
बहुधनधान्या यस्य प्रबभुः वृन्दानि बहुविधानि आयस्य ॥ ५२ ॥

प्रतीति । आयस्य पदगमनेन आयासं कृत्वा । प्रतिषिद्धान्यायस्य प्रतिषिद्धो निराकृतो ऽन्यायो ऽनीति र्येन तादृशस्य सुबाहोः सुबाहुनाम्नो राज्ञः राजधानी नगरी प्रापि च प्राप्ता च । कीदृशी बहुधनधान्या बहुतरं धनधान्यं यस्याः सा यस्य सुबाहोः आयस्य धनागमस्य बहुविधानि नानाप्रकाराणि वृन्दानि समूहाः प्रबभुः रेजिरे । एवं सार्थेन सह व्रजन्त्या भैम्या आयासेन सुबाहुपुरी प्राप्तेति भावः । प्रापेत्यापेर्लुङि चिणि । प्रबभुरिति भातेर्लिटि ॥५२॥

सञ्छन्ना माला सानन्दं राज्ञोभृता च नामावासा ।
शोकेनामात्रासावसद्धृतदेहयापनामात्रा सा ॥

सञ्छन्ना माला सानन्दं राज्ञः भृता च नाम अवासा ।
शोकेन अमा अत्र असौ अवसत् धृतदेहयापनामात्रा सा ॥ ५३ ॥

सञ्छन्नेति । असौ दमयन्ती सञ्छन्ना वपुर्मालिन्यात् दमयन्तीति ज्ञातुमशक्या राज्ञः सुबाहो र्माता सानन्दं यथा स्यादेवं भृता नाम पोषिता । नाम सम्भावनायाम् । अत्र सुबाहन्तःपुरे अवासा वासरहिता धृतदेहयापनामात्रा धृतं देहयापना शरीरस्थितिमात्रं यया सा तादृशी देहधारणार्थं भुंक्ते न तु सौख्यार्थमिति भावः । शोकेन अमा शोकसहिता सा भैमी अवसत् वासमकरोत् । यद्वा धृता देहनिर्वाहमात्रे आशायेति सा धृतदेहयापनामात्राशेत्येकं पदम् । अत्र पद्ये यमके शसयोरभेदो

न दोषाय । यमकश्लेषचित्रेषु रलयो र्डलयो र्नभित् । नानुस्वारविसर्गौ च चित्रभङ्गाय संमतौ इतिवत् । असौ भैमी सुबाहुमाता दमयन्तीत्यनभिज्ञाय सानन्दमपुषत् सा चशरीररक्षामात्राहाराभूदिति भाव: । अवसदिति वसेर्लङि । अत्रेयं भारतवार्त्ता । सायाह्ने भैमी वणिग्भि: सार्द्धं सुबाहुनगरं प्राप्ता । अथ प्रासादस्था राजमाता तां दृष्ट्वा धात्रीद्वारा स्वसमीपमानीय का त्वमिति प्रोवाच । तत: दमयन्त्या: परिचारिकाहमिति भैम्याह । राजमातोवाच अत्र तिष्ठ । ततो भैमी निर्बन्धं चकार पादसेवनमुच्छिष्टफेटनं न करिष्यामीति ॥५३॥

पदा पदापरिभ्रमन्नयेन यापदा पदा ।
वना वना वनाथवत्सजीवना वनाभवत् ॥

पदा पदा परिभ्रमं नयेन या अपत् आपदा ।
वनावनौ अनाथवत् सजीवनावना अभवत् ॥ ५४ ॥

पदेति । अपदा अत्राणा अस्थाना वा या दमयन्ती नयेन नीत्या कृत्वा आपदा विपत्त्या पदा चरणेन वनावनौ वनभूमौ अनाथवत् परिभ्रमं पर्यटनम् आपत् लेभे । सा सजीवनावना जीवनं तस्य अवनं रक्षणं तत्सहिता सजीवितरक्षाभवत् । या भैमी विपदि चरणाभ्यां वनभूमौ पर्य्यभ्रमीत् सा जीवनरक्षणं प्रापेति भाव: । पदंघ्रिश्चरणोऽस्त्रियाम् । आपदित्यापेर्लङि । विपत्त्यां विपदापदौ । अभवदिति भवतेर्लङि ॥५४॥

इतिसुबोधिनीटीकासहिते श्रीकालिदासकृते नलोदये सत्काव्ये तृतीयोच्छ्वास: ॥

---

## नलोदयः ।



अथ तुङ्गोपायस्य श्रवणेन नलस्य सानुगोपायस्य ।
वशगा गोपायस्य स्वमनोभीमश्चिरं जुगोपायस्य ॥

अथ तुङ्गोपायस्य श्रवणेन नलस्य सानुगः अपायस्य ।
वशगाः गोपाः यस्य स्वमनः भीमः चिरं जुगोप आयस्य ॥ १ ॥

अथेति । अथानन्तरं तुङ्गोपायस्य तुङ्ग उच्च उपायः सामादि र्यस्य तादृशस्य नलस्य अपायस्यापक्रमणस्य दुःखस्य वा श्रवणेन सानुगः अनुगच्छन्तीत्यनुगा स्तैः सहितः सानुचरः चिरं बहुकालम् आयस्य प्रयासं कृत्वा नलान्वेषणाय भीमः स्वमनः स्वस्य मानसं जुगोप रक्षितवान् । यस्य भीमस्य गोपाः गां भूमिं पान्तीति गोपाः राजानः ग्रामौघाधिकारिणो वा गोपजातीया वा वशगा आयत्ताः । नलापगमनं श्रुत्वा तदन्वेषणार्थं बहुधा आयस्य शोकसहितं स्वहृत्कथञ्चिदरक्षत् । गोपो गोपालके गोष्ठाध्यक्षे पृथ्वीपतावपि । ग्रामौघाधिकृते पुंसीति मेदिनीकरः । स्यादुकोधिकृतो ग्रामे गोपोग्रामेषु भूरिषु इत्यमरश्च ॥ १ ॥

निशि च दिवा चार्य्यस्यच्चतस्य नलविचिन्तयेथ
वाचार्य्यस्य। भृशमेवाचार्य्यस्य द्विजोत्तमैः शिष्यकै
रिवाचार्य्यस्य ॥

निशि च दिवा च अर्य्यस्यच्चतस्य नलविचिन्तये अथ वाचा आर्य्यस्य ।
भृशं एव अचारि अस्य द्विजोत्तमैः शिष्यकैः इव आचार्य्यस्य ॥ २ ॥

निशीति । अस्य भीमस्य वाचा वचनेन द्विजोत्तमै र्ब्राह्मणश्रेष्ठै र्नलविचिन्तये नलान्वेषणाय निशि रात्रौ च दिवा च दिवसे भृशमेव अत्यर्थमेव अचारि नानादेशसञ्चरणमकारि । कीदृशस्यास्य ? अर्य्यस्यच्चतस्य अरेः असयः अर्य्यसयस्तैः शतुखड्गैरताड़ितस्य । एवमार्य्यस्य श्रेष्ठस्य आचार्य्यस्य गुरो र्वचसा शिष्यकैरिव शिष्यैरिव स्वार्थे कः शिष्या यथा गुरोराज्ञया ऽहर्निशं सञ्चरन्ति तथेत्यर्थः ॥ २ ॥

अथ नयनेत्रासादिप्रचुरापूःकेनचिज्जनेत्रासादि ।
यत्र सुनेत्रासादिग्भ्रमेणदुःखङ्गतावनेत्रासादि ॥

अथ नयनेत्रा सादिप्रचुरा पूः केनचित् जने अत्र असादि ।
यत्र सुनेत्रा सा दिग्भ्रमणेन दुःखं गता वने त्रासादि ॥ ३ ॥

अथेति । अथानन्तरम् अत्र जने विषये केनचिद-निर्वचनीयचतुरेण सुदेवनाम्ना द्विजेन नयनेत्रा नीतिनिपुणेन सादिप्रचुरा सादिनो ऽश्ववाराः प्रचुरा यस्यां सा पूः असादि प्राप्ता । सा का ? यत्र पुरि सा सुनेत्रा भैमी वर्त्तत इति शेषः । कीदृशी सा ? वने दिग्भ्रमेण दिग्-

भ्रान्त्या त्रासादि त्रासपूर्वकं दुःखं गता प्राप्ता। दिग्भ्रमेणेत्यत्र आदिक्रान्त्या इतिपाठे यत्र पुरि आदिक्रान्त्या प्रथमप्रवेशेन जने लोके त्रासादि भवति यत्र पुरि वने दुःखङ्गता सा सुनेत्रा आसीदित्यर्थः ॥ ३ ॥

सह दीनायत तेन स्वगृहञ्च भैमी ययेसुनायततेन।
स्वनयेनायततेनप्राप्तैर स्वासोञ्च शोभनायतते न॥

सह दीना आयत तेन स्वगृहं च भैमी ययो असुना आयततेन।
स्वनयेन अयततेनप्राप्तैर स्वासोः च शोभना यतते न॥ ४॥

सहेति। दीना दुःखिता भैमी तेन द्विजेन सह स्वगृहम् आयत गतवती। चेदिपुरीनिलयं ब्राह्मणं गृहीत्वा स्ववासस्थाने गतवती। आयत तेन धनागमव्याप्तेन असुना द्विजेन सह भैम्या यये भीमगृहमतीति शेषः। चेदिराजदत्तधनवता द्विजेन सह भैमी भीमगृहमगादिति भावः। यद्वा नलान्वेषणाय भीमदत्तबहुधनवता विप्रेण भैम्या सह चेदिगृहं यये इत्यर्थः। शोभना सा भैमी स्वनयेन स्वनीत्या अयततेनप्राप्तैर अयः शुभविधिस्तेन ततो व्याप्तो य इनः स्वामी नल स्तस्य प्राप्तैर यतते स्म यत्नमकरोत्। स्वासोः स्वकीयप्राणस्य प्राप्तैर न यतते स्म। अत्रेयं भारतवार्त्ता सुनन्दान्तःपुरे समागतं सुदेवं ब्राह्मणं दृष्ट्वा दमयन्ती रुरोद। सुदेव उवाच। अहं तव भ्रातुः सखा सुदेव नामा भीमवचनात् त्वामन्वेष्टुमागतः तव बान्धवाश्चां

विना मृता इव तिष्ठन्ति। ततो राजमातरं सर्ववृत्तान्तमकथयत्। सुबाहुमाता च नलपत्नीं दमयन्तीं ज्ञात्वा आलिङ्ग्य सान्त्वयामास सुनन्दा तु निश्चयार्थं तस्या गात्रमलं दूरीकृत्य शिरस्थार्द्धचन्द्राकाररक्तमण्डलाच्छनं ददर्श। तच्चिह्नेन सुदृढं ज्ञात्वा मम भगिन्याः कन्या त्वं इत्युक्त्वा राजमाता तामलंकृत्यामात्यैः सुदेवेन च सहितां दमयन्तीं पितृगेहं प्रापयत् तत्र सा पुत्रादिभिः सह युयोज। भीमश्च सुदेवाय पुनः पुनः प्रणामं कृत्वा बहुधनानि ददौ। ततो नलान्वेषणार्थं पुनर्ब्राह्मणान् प्रेषयामास इति ॥४॥

वसनांशस्य स्तेन क्वासि ममायं विधिर्यशस्यस्ते न।
छद्म विशस्यस्तेन स्वजनेन भृतेन भवसि शस्यस्तेन॥

वसनांशस्य स्तेन क्व असि मम अयं विधिः यशस्यः ते न।
छद्म विशसि अस्तेन स्वजनेन भृतेन भवसि शस्यः तेन॥ ५॥

वसनेति। नयमेवाह। हे वसनांशस्य वस्त्रखण्डस्य स्तेन चौर नल त्वं क्वासि मम दमयन्त्या अयं विधिः। वनगमनादि स्ते यशस्यो न यशसे न। हे प्रिय अस्तेन त्यक्तेन स्वजनेन स्वबन्धुना कृत्वा छद्म कपटं विशसि प्राप्नोषि। भृतेन पालितेन तेन स्वजनेन शस्यः स्तुत्यो भवसि। स्वबन्धुपालनेन कीर्त्तिरुदयस्तत्तु त्वया न कृतमिति भावः॥५॥

सजनस्तेनागादिक्रामीतिजनेनतन्मतेनागादि ।
भर्तृकृतेनागादिस्यदेनभुविवस्तुपरिहृतेनागादि ॥

सः जनः तेन अगादिक्रामी इति जनेन तन्मतेन अगादि ।
भर्तृकृते नागादिस्यदेन भुवि वस्तुपरिहृतेन अगादि ॥ ६ ॥

सजनेति । अगादिक्रामी पर्वतादिक्रमणशीलः स जनः प्रेष्यजनः भर्तृकृते नलार्थे तन्मतेन भैम्या सम्मतेन केनचिदन्तःपुरचारिणा जनेन इति पूर्वोक्तश्लोकोक्तिप्रकारेणागादि उक्तः । तथा च अस्य पूर्वोक्तश्लोकस्यार्थं ज्ञात्वोत्तरं यो ददाति तदागत्य कथयेत्युक्तः ततस्तेन जनेन प्रेष्यलोकेन । नागादिस्यदेन नागं सर्पमत्तीति नागादी गरुड़स्तद्वत् स्यदो वेगो यस्य तेन वस्तुपरिहृतेन नागरीयवस्तुत्यक्तवता छद्मचारिणा इत्यर्थः भुवि भूमौ अगादि पूर्वोक्तश्लोकस्य को ऽर्थ इति अवादि । स प्रेष्यलोको दमयन्त्यनुमतेन केनाप्यन्तःपुरचारिणोक्तः । एतदभिज्ञाने नलस्येति दमयन्त्यैव ग्राहितसंज्ञः नलान्वेषणाय श्लोकार्थं पृच्छन् पर्य्यचारीदितिभावः । रंहस्तरसी तु रयः स्यदः । शैलवृक्षौ नगावगौ ॥ ६ ॥

कोप्यूचे तनयायाः पदमेत्य नृपस्य तेषु चेतनयायाः ।
भीर्मुञ्चेत न यायादर्त्तिस्त्वां दुःसहा च चेतनया या ॥

कोपि ऊचे तनयायाः पदं एत्य नृपस्य तेषु च इतनयायाः ।
भीः मुञ्चेत न यायात् अर्त्तिः त्वां दुःसहा च चेतनया या ॥ ७ ॥

कोप्यूचे इति। तेष्वन्वेषकेषु मध्ये कोप्यन्वेषकजनः इतनयायाः इतः प्राप्तो ज्ञातो वानयो यया ताहृश्याः ज्ञातनीते नृपस्य भीमस्य तनयायाः पदं स्थानमेत्य ऊचे उक्तवान्। हे दमयन्ति त्वां भी र्भयं मुञ्चेत् त्यजेत्। अर्त्तिः पीड़ा च न यायात् न गच्छेत् भयमर्त्तिश्च न भविष्यतीति यावत्। या अर्त्तिः चेतनया बुद्ध्या दुःसहा सोढुमशक्या। हे दमयन्ति त्वां भयं पीड़ा च हास्यति। नलो मया लक्षित इत्यवोचदिति भावः। पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु। भीतिर्भीः साध्वसभयम्। मुच्लृ मोक्षण इत्यस्यात्मनेपदे घेमुचादीनामितितुमि मुञ्चेतेति रूपम्। मति र्मनीषा बुद्धि र्धी र्धिषणा ज्ञप्तिचेतने इति हेमचन्द्रः। अर्त्तिः पीड़ा धनुः कोयोरित्यमरः॥ ७॥

**निजधामेतं समयाम्रतुपर्णं श्राविताेऽर्थमेतं समया।**
**सचिवसमेतं समया गिरोत्तरं नाजनिष्ट मेतं समया॥**

निजधामेतं समयां ऋतुपर्णं श्रावितः अर्थं एतं सः मया।
सचिवसमेतं समया गिरा उत्तरं न अजनिष्ट मेतं समया॥ ८॥

निजेति। हे दमयन्ति निजधामेतं निजस्थानमयोध्या तत्रेतं तत्र स्थितं अयोध्याधीशम् ऋतुपर्णम् ऋतुपर्णनामानं राजानं समया समागतः। स च मया एनम् अर्थं वसनस्तैन्यादिरूपमर्थं वाच्यं समया सश्रीकया समया

अनतिनिम्नोन्नतया गिरा वाचा आवितः सचिवसमेतं मन्त्रिसमेतं तथा मेतं मां लक्ष्मीम् इतं प्राप्तम् ऋतुपर्णं समया मन्त्रिसहितस्य ऋतुपर्णस्य समीपे उत्तरं प्रतिवाक्यं नाजनिष्ट न जातम्। हे भैमि वसनस्तेयादिकं त्वदुक्तं आवित ऋतुपर्णः। मन्त्रिसहितस्य तस्य समीपे उत्तरञ्च नावाप्तमिति भावः। अभितः परितः समयेति द्वितीया ऋतुपर्णमिति। मन्त्री धी सचिवोऽमात्यः। समयामिति यातेर्लङि। समयान्तिकमध्ययोरिति मेदिनीकरः। अजनिष्टेति दीपजनेत्यादिना चिण् तद्विकल्परूपम्॥ ८॥

दीनानायतनस्थोनानानायतनक्षमोऽस्यसौत्येधिकृतः।
नानायतनकरोलीनानायतनः पथ्युवाचाथ रहः॥

दीनानायतनस्थः नानायतनक्षमः अस्य सौत्येधिकृतः।
ना अनायतनकरः लीनान् आयत नः पथि उवाच अथ रहः॥९॥

दीनेति। अथानन्तरमस्य ऋतुपर्णस्यायतनं गृहं तत्रस्थितः सौत्ये सारथ्येऽधिकृतः। अनायतनकरः न आयतो दीर्घः करो हस्तो यस्य तादृशः कुब्जो ना पुरुषः पथि लीनान्मार्गे लग्नान् गच्छतः नोऽस्मान् दीनान् दुःखितान् रहः विविक्ते आयत आगतवान् इति उत्तरश्लोके वक्ष्यमाणं च उवाच अवादीत्। कीदृशः? नानायतनक्षमः नानाप्रयत्नसमर्थः त्वदुक्तं आवयित्वाऽप्राप्तोत्तरान्मार्गे गच्छतोऽस्मान् सङ्कुचितकरसत् स्तुतो रहसि

एत्येदम् उवाचेति भावः । गुणवचनब्राह्मणादिभ्यः कर्म्मणि चेतिष्यञि सौत्यः । सूतस्त्वष्टरि सारथौ । आयतेत्ययगतावित्यस्य लङि । मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ । रहोन्तिकमुपह्वरे । यद्वा दीनानायतनस्थ इति नलविशेषणं दीनश्चासौ अनायतनस्थः असम्यगायतनस्थश्चेति तादृश इत्यर्थः ॥ ९ ॥

**दीनायानायतयाविवाससेऽस्मै विहीनयानायतया ।**
**नखलुधियानायतयाक्रोधव्यन्धर्म्मनिश्चयानायतया ॥**

दीनाय अनायतया विवाससे अस्मै विहीनयानाय तया ।
न खलु धिया अनायतया क्रोधव्यं धर्म्मनिश्चयान् आयतया ॥ १० ॥

दीनेति । आगत्य किमुवाचेत्याह । दीनाय दुःखिताय अनायतया आयो धनागमः । न आयो यस्यासौ अनायस्तद्भावस्तत्ता तया धनागमरहितत्वेन । विवाससे वस्त्रहीनाय तस्मै वसनस्तेनाय । एवं विहीनं त्यक्तं यानं येन तादृशाय । अनायतया अदीर्घतया अविचारपूर्व्विकया धिया बुद्ध्या तया दमयन्त्या न क्रोद्धव्यं क्रोधो न कर्त्तव्यः । खल्वनुनये । तया कया? या धर्म्मनिश्चयान् धर्म्मनिर्णयानयत गतवती याति धार्म्मिकी । धनागमरहितत्वेन दीनाय वसनहीनाय च तस्मै नलाय तया दमयन्त्या क्रोधो न करणीयः । दैववशादेतत् सर्व्वमभूदिति भावः । क्रुधद्रुहेर्ष्या सूयार्थनायाम् । यं प्रति

कोप इति सम्प्रदानत्वात् चतुर्थी अस्मै इति। आयते-त्ययगतावित्यस्य लङि॥ १०॥

कृतकर्म्मानेन त्वागतोऽस्मि वचसेति तस्य मानेन त्वा।
वेदयमानेनत्वा विप्रे च धनेषु दीयमानेनत्वा॥

कृतकर्म्मा अनेन तु आगतः अस्मि वचसा इति तस्य मानेन त्वा।
वेदयमाने नत्वा विप्रे च धनेषु दीयमानेनत्वा॥ ११॥

कृतेति। प्रेष्यद्विज आह। हे दमयन्ति मानेन प्रमाणेन सत्येन तस्य पुरुषस्य अनेन वचसा वचनेन कृतकर्म्मा कृतकार्य्योऽहं त्वा त्वां प्रत्यागतोस्मि इति वेदयमाने बोधयति द्विजे ब्राह्मणे नत्वा नमस्कृत्य धनेषु दीयमानेनत्वा दीयमानमिनत्वं स्वामित्वं यया तादृशी। धनेषु दत्तस्वामित्वासासीदित्यर्थः। अहं तस्य पुरुषस्य सत्येन वचसा कृतकृत्यस्त्वत्समीपमागत इति वदति विप्रे नमस्कृत्य बहुधनस्वामित्वम् अकार्षीदित्यर्थः। इनः सूर्य्ये प्रभौ राज्ञि। अत्रेयं पुराणवार्त्ता। दमयन्ती च नाना स्तुतिं कृत्वा पर्णादनामानं ब्राह्मणम् ऋतुपर्णराजसारथिनिकटे श्लोकचतुष्टयं दत्वा प्रेषयामास स च तत्र गत्वा तस्मै श्लोकान् ददौ। श्लोका यथा।

क नु त्वं कैतवैश्छित्वा वस्त्रार्द्धं प्रस्थितो मम।
उत्सृज्य विपिने सुप्तामनुरक्तां प्रियां प्रिय॥ १॥

सा वै यथा समादिष्टा तथास्ते त्वत्प्रतीक्षिणी ।
दह्यमाना भृशं बाला वस्त्रार्द्धेनाभिसंवृता ॥२॥
अस्या रुदन्त्याः सततं तेन शोकेन पार्थिव ।
प्रसादं कुरु वै वीर प्रतिवाक्यं ददस्व च ॥ ३ ॥
मा कुरुष्व प्राणनाथ विफलं जीवनं मम ।
यदि तिष्ठन् न वक्तासि स्त्रीहत्या त्वामभिस्पृशेत् ॥४॥

इति पर्णादब्राह्मणाद् वृत्तान्तं श्रुत्वा नल उवाच ।

क्व नु सा क्षुत्पिपासार्त्ता श्रान्ता शेते तपस्विनी ।
स्मरन्ती तस्य मन्दस्य कं वा साद्योपतिष्ठते ॥

इति कथयित्वा श्लोकपञ्चकं प्रस्थापयामास । यथा—

वैधव्यमपि संप्राप्य गोपयन्ति कुलस्त्रियः ।
आत्मानमात्मना सद्यो जितस्वर्गा न संशयः ॥१॥
रहिता भर्तृभिः सद्यो न क्रुध्यन्ति कदाचन ।
प्राणांश्चारित्रकवचान् धारयन्ति कुलस्त्रियः ॥२॥
विषमस्थेन मूढेन परिभ्रष्टसुखेन च ।
यत् सा तेन परित्यक्ता न तत्र क्रोद्धुमर्हसि ॥३॥
प्राणयात्रां परिप्रेप्सोः शकुनै र्हृतवाससः ।
आधिभि र्हन्यमानस्य न श्यामा क्रोद्धुमर्हसि ॥४॥
सत्कृतासत्कृता वापि पतिं दृष्ट्वा यथागतम् ।
राज्यभ्रष्टं श्रिया हीनं न श्यामा क्रोद्धुमर्हसि ॥५॥

इति श्लोकपञ्चकं नीत्वा आगत्य दमयन्तीं श्रावयामास पर्णाद इति ॥ ११ ॥

तत्रापर्णायततस्तनयाद्भैमी तपस्यपर्णायतत ।
तुलितसुपर्णायततस्तस्यागमनायसर्त्तुपर्णायततः ॥

तत्र अपर्णाय ततस्तनयात् भैमी तपसि अपर्णा अयतत ।
तुलितसुपर्णाय ततस् तस्य आगमनाय सर्त्तुपर्णाय ततः ॥१२॥

तत्रेति । ततस्तदनन्तरं तत्र तस्मिन् काले ततो ऽयोध्यायाः पश्चस्यास्तसिल् सर्त्तुपर्णाय ऋतुपर्णसहिताय तस्य नलस्यापर्णाय अपगतस्वर्णं यस्मिन् तादृशाय नलप्रेरितहयानामेकदिवसेन बहुयोजनाध्वलंघनादृणापगमः । तुलितः सुपर्णो गरुड़ो येन तादृशाय आगमनाय तपसि शरीरसन्तापलक्षणे एकभक्तोपवासादौ अपर्णा पार्वती इव भैमी दमयन्ती ततस्तनयात् ततो विस्तृतो यः स्तनयः स्तनीति तस्मादयतत यत्नं समास्थितम् । तदनन्तरं दमयन्ती बहुविशालस्तनीते रयोध्यातो नलस्य सर्त्तुपर्णस्यागमनाय यत्नं कृतवतीति भावः । स्यादृणं पर्युदश्चनम् । ऋणमाधमर्ण्ये इति निपातः । यतीप्रयत्न इत्यस्य लङि ॥१२॥

साकृतसामान्येन स्वावितवत्यसुमनन्यसामान्येन ।
स्वं रहसामान्येनस्वयंवरं स्मरतिनाञ्जसामान्येनः ॥

सा कृतसामा अन्येन आवितवती असुं अनन्यसामान्येन ।
स्वं रहसा मान्येन स्वयंवरं स्मरति न अञ्जसा मानी एनः ॥१३॥

साकृतेति । कृतसामा कृतं साम सान्त्वं यया तादृशी

सा ऽनन्यसामान्येन अन्यासाधारणेन । अन्येनापरेण मान्येन पूज्येन विप्रेणामुम् ऋतुपर्णं रहसा एकान्तेन स्वं स्वकीयं स्वयम्बरं आवितवती अभिश्रवत् पूर्व्वपरिणीता परिणयनान्तरं कर्त्तुं कथं प्रवर्त्तते तत्राह । मानी अभिमानी अञ्जसा झटिति एनः पापं न स्मरति । सा दमयन्ती अन्येन केनापि द्विजेन स्वं स्वयम्बरमुपह्वरे ऋतुपर्णं आवितवती । यतो मानी झटिति पापं न स्मरति । ऋतुपर्णः स्वयम्बरं श्रुत्वा शीघ्रमेष्यति तेन सह नलोप्यागमिष्यतीति भावः । स्यागझटित्यञ्जसाह्नाय द्राक मंक्षुसपदि द्रुते । स्वोज्ञाताात्मनि स्वाक्षिष्वात्मीये स्वोस्त्रियान्धने इत्यमरः । अत्रेयं पुराणवार्त्ता । दमयन्ती मातरमुवाच । सुदेवो यातु ऋतुपर्णं वदतु भैमी पुनः स्वयम्बरं करिष्यति स तु स्वोभावी यदि द्रष्टुमिच्छा तदागच्छ तत् श्रुत्वा तन्माता तथाकरोत् । ऋतुपर्णोपि सुदेवात् तच्छ्रुत्वा गमनं निश्चित्य नलेन पराक्षपत इति ॥ १३ ॥

रहसि तदासन्नाहस्थितः स्म सनलंयुतोमुदासन्नाह । श्रीस्तुमदासन्नाहस्फुटं प्रयामो व्रजेदिति व्युदासन्नाहः ।

रहसि तदा सन्नाहस्थितः स्म सः नलं युतः मुदा सन् आह ।
श्रीः तु मदासन्ना ह स्फुटं प्रयामः व्रजेत् इति व्युदासं न अहः ॥ १४ ॥

रहसीति । तदा सुदेवात् स्वयम्बरवृत्तान्तश्रवणकाले

स ऋतुपर्णः सन्नाहस्थितः सन्नाहे कवचे स्थितः बद्धकवचः मुदा हर्षेण युतः रहसि एकान्ते नलम् इति आह उवाच इतीति किं ? हे सन् पूज्य अहः दिनं व्युदासं नाशं न व्रजेत् न गच्छेत् वयं दमयन्तीपुनःस्वयम्बरे स्फुटं प्रव्यक्तं प्रयामो गच्छामः । श्रीस्तु लक्ष्मीस्तु दमयन्तीलाभात् तद्रूपा वा मदासन्ना मदन्तिकगता भवेत् । ह सम्बोधने । रहसीत्यत्र हरसीति पाठे त्वं हरसि चेद्धरसि चेत्तदा स्फुटं प्रयाम इत्यर्थः । क्वचित्तु द्वितीयचरणे स्मरयुतो नलं मुदा सन्नाह इति पाठस्तत्र स्मरयुतः सन् कामार्त्तः सन् मुदा हर्षेण नलम् आह इत्यर्थः । हे नल मां चेद्धरसि तदाद्य प्रयामो भीमपुरं दिवसो न नाशं व्रजेत् । अद्यैव मां नय दमयन्तीं वरितुं गन्तव्यमेवेति भावः । असगतावित्यस्यानेकार्थत्वात् । हरसि हञो लटि । व्रजेत् व्रजेलिङि । समीपे समयासन्नसंनिकृष्टसनीडवत् ॥ १४ ॥

सावनितावध्वानः स्वगुणैः कर्षतिकेहतास्त्ववध्वान ।
समहस्तावद्ध्वानः श्वइतियोजनशतंमितावध्वानः ॥

सा वनिता बध्वा नः स्वगुणैः कर्षति के हृताः च बध्वा न ।
समहः तावत् ध्वानः श्वः इति योजनशतं मितो अध्वा नः ॥१५॥

सेति । सा वनिता भैमी स्वगुणैरात्मगुणै र्बध्वा संयम्य नोऽस्मान् कर्षति आकर्षति । यमके ववयोरैक्यं न दोषाय । डलयो रलयोश्चैव शसयो र्बवयोस्तथा । वदन्त्येषां हि

सावर्ण्यमलङ्कारविदो जनाः इत्यालङ्कारिकवचनात्। च पुनर्बध्वा स्त्रिया केन हृताः। अपि तु सर्व एव हृता इति भावः। स मह स्तावत्सस्वयम्वरोत्सवः तावत् श्वः आगामि दिवसे इत्यनेन प्रकारेण ध्वानः लोकध्वनिः लोकवार्त्तासीति यावत्। नः अस्माकम् अध्वा मार्गः योजनशतं मितौ प्रमाणे वर्त्तते। हे वाहक भैमीस्वयम्वरः श्वो भवितेति लोकवार्त्ता अस्माकं मार्गः शतयोजनमितः अतः शीघ्रं रथं सज्जीकुरु इति भावः। नारी सोमन्तिनी बधूः। बधबन्धन इत्यस्मात् का बध्वेति। कृषविलेखन इत्यस्माद्गोवाहिकालक्टि कर्षतीति। मह उद्धव उत्सवः। ह्योगते ऽनागतेऽह्नि श्वः परश्वस्तु परेद्यवि। अयनं वर्त्ममार्गाध्वपन्थान इत्यमरः॥१५॥

तत्त्वरयामायामः प्रणयेर्यदिमानितत्रियामायामः।
नलजायामायामस्त्वित्यूचे का दुर्द्दियामायामः॥

तत् त्वरया अमा यामः प्रणयेः यदि मा अनितत्रियामायामः।
नलजायामायां अस्तु त्वा इति ऊचे का दुर्द्दियां आयामः॥१६॥

तत्त्वरेति। हे सूत तत् तस्मात् अनितत्रियामायामः अनितो ऽप्राप्तः त्रियामाया रात्रेर्यामः प्रहरो येन तादृक् त्वं त्वरया संभ्रमेण मा मां यदि प्रणये र्नयसि तदा अमा समीपं सह वा यामो गच्छाम इति। अनेन प्रकारेण नलजायामायां नलजाया या दमयन्त्याः मायां

व्याजमस्मृत्वा अविचिंत्य ऊचे। यतो दुर्धियां दुष्टाः कामक्रोधवशाक्रान्ताश्च ता धियश्चेति तासां दुष्टबुद्धीनामायामो दैर्घ्यं विचारपरम्पराः क्व कुत्र? अपि तु कुत्रापि न। अथवा दुष्टाः धियो येषां ते तादृशानां पुंसामायामो विचारदैर्घ्यं क्व? क्वचित्तु दुर्द्धियामित्यत्र युवधियामिति पाठः तत्र यूनां तरुणानां धियां बुद्धीनां क्व आयामो दैर्घ्यं? अपि तु क्वापि नेत्यर्थः। रात्रिप्रहरमध्ये मां यदि नयसि तदा भैमीस्वयम्बरं व्रजामीत्युक्तवान्। दमयन्तीव्याजमजानान एवेति भावः। दैर्घ्यमायाम आरोहः। अस्मदो द्वयोश्चेत्येकत्वे बहुवचनम्। संभ्रमस्त्वरा। अमा सह समीपे च। प्रणयेरिति णीञोलिङि। मात्वामौ द्वितीयाया इति मादेशः॥ १६॥

मां भजमानाश्वःस्यान्नूनमसौ तत्प्रणोद्यमानाश्वःस्यां। इति मतिमानाश्वस्यान्यायमनाशंक्य विकृतिमानाश्वस्यां॥

मां भजमाना श्वः स्यात् नूनं असौ तत्प्रणोद्यमानाश्वः स्यां।
इति मतिमान् आश्वस्य अन्यायं अनाशंक्य विकृतिमान् आशु अस्यां॥१७॥

मामिति। आदिकुलकं तत्प्रचोद्यमानाश्वः तेन बाहुकेन प्रचोद्यमानाः प्रेर्यमाणा अश्वा यस्य एतादृक् चेत् स्यां भवेयं तदा ऽसौ दमयन्ती श्वो नूनं निश्चयेन मां भजमाना आश्रयन्ती स्यादिति मतिमानेवं बुद्धिसहितः स ऋतुपर्णः अस्यां दमयन्त्याम् अन्यायं परस्त्र्यभिलाष-

लक्षणमनार्थक्य आश्रस्य आश्वासं प्राप्य आशु शीघ्रं विक्रतिमान् मनोविकारवानित्यूचे इति पूर्व्वश्लोकेनान्वयः। यद्यसौ मां नयति तर्हि श्वः सा मां वृणीतेति परस्य-भिलाषमबुध्वा विकारवान् नलं तथोवाचेति भावः। नूनं तर्केऽर्थनिश्चये। यद्वा मतिमान् नलः मनसि आश्रस्य स्वयम्वरवार्त्तां श्रुत्वा उत्पन्नकोपं विचारेण शमयित्वा अस्यां दमयन्त्याम् अन्यायम् अनाशङ्कय अमत्वा चेत् यदि प्रचोद्य-मानाश्वः स्यां तदा असौ दमयन्ती श्वः प्रातःकाले भज-माना स्यात् इति हेतोः आशु शीघ्रं विकृतिमान् रोमा-ञ्चितः स्यात् बभूवेत्यर्थः ॥१७॥

अथरथमारावन्तंशस्त्राणिनलःशुभाश्वमारावन्तं।
सजगामारावन्तंनृपतिमारोप्यचगुरुतमारावन्तं॥

अथ रथं आरावन्तं शस्त्राणि नलः शुभाश्वं आर अवन्तं।
सः जगाम अरौ अन्तं नृपतिं आरोप्य च गुरुतमारावं तं॥१८॥

अथेति। अथ वचनानन्तरं नलः आरावन्तम् आ-समन्तात् अरं शीघ्रगं अवन्तम्। यद्वा अरनम् आरः शीघ्रगतिः तम् अवन्तं रक्षन्तम्। यद्वा आ समन्तात् अरं शीघ्रम् अवन्तं गच्छन्तम्। यद्वा अस्य विष्णोः अरं चक्रम् आरन्तमिव अवन्तं गच्छन्तम् अतिशीघ्र-गमित्यर्थः। तं शस्त्राण्यायुधानि अवन्तं रक्षन्तं शुभाश्वं शोभना अश्वा यस्मिन् तादृशं गुरुतमः गरिष्ठतम आरावः

शब्दो यस्य तादृशं रथम् आर गतवान्। च पुनः असौ शतौ अन्तं नायकं तं नरेन्द्रमृतुपर्णं रथमारोप्यारोप्य जगाम भीमनगरं गतवान्। ऋतुपर्णवचनोत्तरमृतुपर्णं रथमारोप्य कुण्डिननगरम् अनयदिति भावः। जगामेति गमेर्लिटि अन्तोऽध्यवसिते मृत्यौ स्वरूपे निश्चयेऽन्तिके। अरं शीघ्रे च चक्राङ्गे शीघ्रगे पुनरव्ययवत् इति मेदिनीकरः॥१८॥

स्वांसकृतावसनस्य क्षणादूरत्वेन सङ्गतावसनस्य।
भूभर्त्तावसनस्यव्यस्मयत रथद्रुतेर्धुतावसनस्य॥

स्वांसकृतावसनस्य क्षणदूरत्वेन सङ्गतौ असनस्य।
भूभर्त्ता वसनस्य व्यस्मयत रथद्रुतेः धुतौ असनस्य॥१९॥

स्वांसेति। भूभर्त्ता ऋतुपर्णः स्वांसकृतावसनस्य स्वस्यांसे स्कन्धे कृतम् आवसनमाच्छादनं येन तादृशस्य वसनस्य रथद्रुतेः रथवेगात् उत्पन्नस्य असनस्य वायोर्धुतौ कम्पे सति असनस्यासनदृश्यस्य सङ्गतौ सङ्गमे क्षणदूरत्वेन क्षणादेव बहुयोजनान्तरितत्वेन व्यस्मयत विस्मितो बभूव। नलप्रेरितरथवेगवशोद्भवमरुद्धूतोत्तरीयस्य क्षणदूरत्वादृतुपर्णोऽद्भुताय मानमना अभूदिति भावः। स्कन्धो भुजशिरोंसोस्त्रीत्यमरः। अस्यतीत्यसनो वायुः समीरपर्यायः। यद्वा स्वांसकृता वसनस्येत्यस्य स्वांसे स्वस्कन्धे कृतम् अवसनम् अस्थिति येन तस्य रथवेगोद्भूतवायुनोड्डीयमानस्येत्यर्थः। अत्रेयं पुराणवार्त्ता। स्वांसादुत्तरीये

भ्रष्टे राजा बाहुकम् उवाच । अश्वान् संयच्छ वार्ष्णेयनामाऽपरसारथिः उत्तरीयमानयतु । बाहुक उवाच । बहुयोजनान्तरितं तदतो नानेतुं शक्यमिति ॥१९॥

फलगणनादक्षस्यव्यधिततदासोऽश्वनोदनादक्षस्य ।
तपसि च नादक्षस्य प्रहर्षणं हृदयबोधनादक्षस्य ॥

फलगणनात् अक्षस्य व्यधित तदा सः अश्वनोदनादक्षस्य ।
तपसि च ना दक्षस्य प्रहर्षणं हृदयबोधनात् अक्षस्य ॥२०॥

फलेति । स ना पुरुष ऋतुपर्णः अक्षस्य द्यूतस्य हृदयबोधनात् हृदयज्ञानाद्धेतोः अक्षस्य कलिद्रुमस्य फलगणनात् फलपरिसंख्यानात् अश्वनोदनादक्षस्य अश्वानां नोदना वाहनं तत्र दक्षस्य चतुरस्य तपसि च तपोविषये दक्षस्य दक्षप्रजापतिसदृशस्य नलस्य प्रहर्षणमाह्लादनं व्यधित चक्रे । यतोयं राजा फलगणनादक्षः अतः पाशकगणनाकोविदोपि स्यात् एतां विद्यां नीत्वा पुन र्जेष्यामीति कृत्वा नलस्य महाहर्षोऽभूदिति पर्यवसितार्थः । स ऋतुपर्णो विभीतकफलस्येयत्ता कथनादक्षहृदयज्ञस्य नलस्य प्रहर्षणं मन आह्लादयाञ्चकारेति भावः । त्रिलिङ्गस्तु विभीतकः । अक्षस्तुषः कर्षफलो भूतावासः कलिद्रुमः । व्यधितेति धाञो लुङि स्थाध्वोरिच्चेतीत्वे ह्रस्वादिति सिज्लोपरूपम् । अत्रेयं पुराणवार्त्ता । ऋतुपर्णो विभीतकवृक्षं दृष्ट्वा बाहुकमुवाच । ममात्र गणनाकौशलं पश्य

अस्मिन् वृक्षे पतितं पत्रमेकाधिकशतं फलञ्च तावदेव पतितं स्थितानि पत्राणि पञ्चकोट्यः फलानि द्वे सहस्रे। वाहुक उवाच। वार्ष्णेय रश्मीन् संयच्छ अहं राजगणितं गणयिष्यामि ततो नलस्तद्गणयित्वा आह अत्यद्भुतमिदम् इमां विद्यां मह्यं देहि मत्तोऽश्वहृदयविद्यां गृहाण इति परिवर्त्तितम्। तदाह ॥२०॥

बलजितदेवार्य्याभ्यां विद्याविनिमयो युगपदेवार्य्याभ्यां। संमर्देवार्य्याभ्यां व्यधायि संस्पृश्य सम्पदे वार्य्याभ्यां॥

बलजितदेवार्य्याभ्यां विद्याविनिमयः युगपत् एव आर्य्याभ्यां।
संमर्दे अवार्य्याभ्यां व्यधायि संस्पृश्य सम्पदे वारि आभ्यां॥२१॥

बलेति। अथ रथवेगफलगणनकौतुकदर्शनानन्तरं बलजितदेवार्याभ्यां बलेन सामर्थ्येन जितः पराजितो देवार्यः देवस्वामीन्द्रो याभ्यां तादृग्भ्यामाभ्यां नलर्त्तुपर्णाभ्यां संमर्दे रणेऽवार्याभ्यां निवारयितुमशक्याभ्यां युगपदेव एकवारमेव वारि जलं संस्पृश्य सम्पदे श्रिये विद्याविनिमयो विद्यापरिवर्त्तनं व्यधायि विहितः। अथ नलर्त्तुपर्णौ रथादवतीर्य्य आचम्य विद्याग्रहणं परस्परञ्चक्रतुरिति भावः। व्यधायीति। धाञोलुङि चिणि आतो युक्चिण् कृतोरिति युकि सति रूपम् ॥२१॥

तदनु द्रुतमच्चमतः स्वीकृत्याक्षदहनेधिक तमच्चतः। कलिरुन्नतमच्चमतः स्फुटमेवगतोनलस्तु नतमच्चमत ॥

तदनु द्रुतं अच्चं अतः स्वीकृत्य अक्षदहने अधिकतमच्चमतः ।
कलिः उन्नतं अच्चं अतः स्फुटं एव गतः नलः तु न तं अच्चमत ॥२२॥

तदिति । तदनु ततः पश्चात् स्फुटं प्रव्यक्तम् अक्षदहने कलिदहनेऽधिकतमच्चमतः अत्यन्तसमर्थात् । अतोऽस्मात् नलसकाशात् कलिर्द्रुतमेव उन्नतम् उच्चैस्तरम् अच्च विभीतकवृक्षं श्रितः प्राप्तः । पुनः नलः अतः ऋतुपर्णादक्षं स्वीकृत्य अक्षज्ञानं प्राप्य तं कलिं न अच्चमत न विषेहे । ऋतुपर्णादक्षहृदयं प्राप्य कलिं यावद् भस्मसात्करोति तावत् नलाद् विनिर्गत्य विभीतकतरुमधिश्रयत् नलस्तु तस्मै चुकोपेति भावः। पश्चात् साहृव्ययोरनु । लघुश्चिप्रमरन्द्रुतम् । अच्चमतेति चमुष् सहनेऽस्मात् लङि ॥२२॥

पतितमलसमेतस्या भैम्यारुषिविद्विमानलसमेतस्याः। आर्च्यनलसमेतस्याश्रितस्य शरणप्रदोनलसमेतः स्याः ॥

पतितं अलसं एतस्याः भैम्याः रुषि विद्धि मा अनलसमे तस्याः ।
आर्च्यंनलसमेतस्य आश्रितस्य शरणप्रदः नल सः मे अतः स्याः ॥२३॥

पतितमिति । कलि र्नलमाह । हे नल एतस्यास्तव

हृदये विद्यमानायास्तस्या भैम्या अनलसमे ऽग्निसदृशे रुषि रोषे पतितमत एवालसं दुःखितं मां विद्धि जानीहि । आर्त्त्यनलसमेतस्य आसमन्तात् या अर्त्तिः पीडा सैवानलस्तत्समेतस्य संयुक्तस्य आर्त्तिबलसमेतस्येति पाठे आर्त्तेः पीडाया बलेन आधिक्येन समेतस्येत्यर्थः । मे मम आश्रितस्य आश्रयवतः । अतः दमयन्तीक्रोधात शरणप्रदः प्राणत्राणदाता स त्वं स्याः भवेः अः पीडायाम् । दमयन्तीरोषाग्निना दह्यमानं मामृति किं रोषं करोषि ? भैमीकोपज्वलितस्य मे शरणं भवेति भावः । आस्तुस्यात्कोपपीडयोः । अर्त्तिः पीडा धनुः कोट्योः ॥२३॥

कलिमितिनानामायं नमन्तममुञ्चन्महामना-नामायं । कीर्त्तिधनानामायं सदधाति हरन्ति रिपुजनानामायं ॥

कलिं इति नानामायं नमन्तं अमुञ्चत् महामनाः नाम अयं ।
कीर्त्तिधनानां आयं सः दधाति हरन्ति रिपुजनानामाः यं ॥२४॥

कलीति । इत्यनेन प्रकारेण नमन्तं प्रणमन्त नानामायं नानाव्याजं कलिं महामना महाशयोयं नलो ऽमुञ्चत् त्यक्तवान् । नामसम्भावनायाम् । यं पुरुषं रिपुजनानामाः शत्रुजननमस्काराः हरन्ति आकर्षन्ति स पुमान् कीर्त्तिधनानां यशोलक्षणद्रविणानामायं दधाति धारयति । एवं बहुधा नमस्कुर्वन् तं कलिं कारुणिकतया ऽत्यजत् । यतः शत्रुनतयोयं वश्यति सयशो धनवान् भवतीति ।

मुचत्कमोचण इत्येतस्य लङि अमुञ्चदिति । नाम प्राकाश्य-सम्भाव्यक्रोधोपगमकुत्सने । अत्रेयं भारतवार्त्ता । अक्ष-हृदयं गृहीतवतो नलस्य देहात् कर्कोटकनागविषं वमन् कलिर्निःसृतः तं कलिं नलः शप्तुमुद्यतः । ततोऽतिभीतः कलिर्नलमुवाच त्वं मे शरणम्भव मा शपस्व ये जनास्त्वां कीर्त्तयिष्यन्ति तेषां मत्तो न भयं भवेत् । अहमधुं विभीतक-वृक्षं प्रविशामि ततः कारणात् नलस्तम् अक्षमत । ततो विभीतकवृक्षं स प्रविवेश ततः प्रभृति विभीतकवृक्षच्छायापि न गृह्यते इति ॥२४॥

अथनुन्नाश्वस्तेनप्रास्थितराजामहात्मनाश्वस्तेन ।
सालननाश्वस्तेनस्यादितिहसताविरोधिनाश्वस्तेन ॥

अथ नुन्नाश्वः तेन प्रास्थित राजा महात्मना श्वः ते न ।
सा ललना आश्वस्तेन स्यात् इति हसता विरोधिना आशु अस्तेन ॥२५॥

अथेति । अथ कलिगमनान्तरं विरोधिना कलिना शत्रुणा आशु शीघ्रं अस्तेन त्यक्तेन । आश्वस्तेन विश्रान्त-वता दुःखाद्‌ वा आश्वस्तेन आश्वासं प्राप्तवता महात्मना महाप्रभावेण । सा ललना भैमी श्वः आगामिदिने ते तव किन्नस्यादपि तु स्यादेवेति व्याजेन सा तव स्त्री न स्यात् न भविष्यतीति मनसि कृत्य हसता तेन नलेन नुन्नाश्वः प्रेरित-हयः स राजा ऋतुपर्णः प्रास्थित प्रचचालेति यावत् । विद्योपदेशस्थानात् शेषमार्गमवगाहतेति भावः । नुन्नानु-त्तास्तविधूता विद्धक्षिप्रेरिताः समाः । समवप्रविभ्यः स्थ

इत्यात्मने पदे स्याघ्वोरिच्चेतीत्वे सिचो लोपे लङि रूप-
मास्थितेति । उपसर्गेण धात्वर्थो बलादन्यत्र नीयत इति
स्थित्यर्थस्य प्रपूर्वत्वे तद्विरुद्धार्थत्वम् । उद्योगते ऽनागतेऽक्लि-
ष्ठ इत्यमरः ॥ २५ ॥

सोऽयमनेनायततामिष्ट इति नलः समन्व नेना-
यततां । वहति दिनेनायततां पुरीं प्रियेणा
श्रितां जनेनायततां ॥

सः अयं अनेना यततां इष्टः इति नलः समं तु अनेन आयततां ।
वहति दिने अनायततां पुरीं प्रियेण आश्रितां जनेन आयत तां ॥२६॥

सोऽयमनेनेति । अयं कलिमुक्तो ऽनेना निष्पापो नलः
यततां यतीनाम् इष्टः वल्लभः । यद्वा इष्टे ऽभीप्सिते दम-
यन्तीदर्शने यततां यत्नं करोतु इति हेतो र्दिने दिवसे
ऽनायततां अदीर्घतां वहति सति धारयति सति स नलो
ऽनेन ऋतुपर्णेन समं सह आयततां धनागमव्याप्तां प्रियेण
जनेन दमयन्त्याश्रितां तां पुरीं कुण्डिनाख्याम् आयत
आगच्छत् आगत गतवान् । कलिमुक्तो नलो भैमीं पश्यत्वि-
तीव सकरुणे दिने ऽस्तं गच्छति सति ऋतुपर्णेन सह नलः
कुण्डिनपुरं प्रविवेशेति भावः । अयनेत्ययगताविह्यस्य
लङि । दैर्घ्यमायामः । वहप्रापण इत्यस्य शतरिरूपं
वहतीति ॥२६॥

कर्त्तुमानन्ते न श्रमइति नीतोभुवोऽयमानन्तेनः ।
स्वन्धामानन्तेन प्रेम्णा भीमेन जितविमानन्तेन ॥

कर्त्तुं मानं ते न श्रमः इति नीतः भुवः अयं आनन्ता इनः।
स्वं धाम अनन्तेन प्रेम्णा भीमेन जितविमानं तेन ॥२७॥

कर्त्तुमिति। तेन भीमभूपेन ते तव श्रमो मार्गोद्भव-परिश्रमो नाभूदित्युक्त्वा स्वागतमाभाष्य आनन्ता कृत-नति ईर्षितनम्रत्वोयं भुवः भूमेरिनः प्रभु ऋतुपर्णो मानं पूजां संमानं वा कर्त्तुं विधातुं जितविमानं जितानि विमा-नानि व्योमयानानि येन तादृशं स्वं स्वकीयं धाम गृहम्। अनन्तेन बहुतरेण प्रेम्णा स्नेहेनानीतः प्रापितः। तदन-न्तरं कृतानतिः ऋतुपर्णस्तेन भीमेन विमानसुन्दरं स्वसौधं पूजयितुमानिन्य इति भावः। इनः सूर्ये प्रभौ। प्रेम स्नेहः। व्योमयानं विमानोऽस्त्रीत्यमरः। धाम रश्मौ गृहे देहे स्थाने जन्मप्रभावयोरिति हेमः। यद्वा तेन भीमेन अयम् ऋतुपर्णः अर्थादस्य श्रमोमार्गोद्भवः श्रमः इति हेतोः स्वधाम नीतः कथम्भूतेन ? मानन्तेन मायाः लक्ष्म्याः अन्तं विनाशाभावो यस्य तेन स्थिरलक्ष्मीकेणेति यावदित्यर्थः ॥२७॥

सज्जनतामहितस्य व्यग्रेतरलोकसूचितामहितस्य।
सद्विषतामहितस्य द्रुतं पुरस्येक्षणात्ततामहितस्य॥

सज्जनतामहितस्य व्यग्रेतरलोकसूचितामहितस्य।
स द्विषतां अहितस्य द्रुतं पुरस्य ईक्षणात् ततान हि तस्य ॥२८॥

सज्जनतेति। स ऋतुपर्णः सज्जनतामहितस्य साधु-

त्वेन पूजितस्य। यद्वा जनानां समूहो जनता सती चासौ जनता चेति सज्जनता तया महितस्य पूजितस्य पूजितस्येत्यर्थः। द्विषतां शत्रूणाम् अहितस्यानिष्टस्य तस्य भीमस्य। व्यग्रेतरलोकसूचितामहितस्य व्यग्रेतरे अव्यग्रा ये लोकास्तैः सूचिता प्रकाशिता आ समन्तात् महिता उत्सववत्ता यस्य तादृशस्य पुरस्य कुण्डिनस्येक्षणाद् आलोकनाद् द्रुतं शीघ्रं ततामः ग्लानिं जगाम हि निश्चये। भीमपुरसमृद्धिदर्शनात् तस्मितो ऽभूदिति भावः। महउद्भव उत्सवः। तमु-ग्लानावित्यस्य लिटि ततामेति। यद्वा स नलः ततामः ग्लानिं प्राप स्वदैन्यस्मरणादिति भावः। हितस्य दृष्टस्य श्वशुरस्य पुरस्य दर्शनादित्यर्थः॥ २८॥

प्रथिततमायामायां शुचिरथवसतावनुत्त मायामायां। चारुतमायामायान्नलः स्मरन्वास मसुसमायामायां॥

प्रथिततमायाः मायां शुचिः अथ वसतौ अनुत्तमायामायां।
चारुतमायाम् आयात् नलः स्मरन् वासं असुसमायाः मायां॥२९॥

प्रथितेति। अथानन्तरं शुचिः पवित्रः कर्कोटकवस्त्र-परिधानात् नलः मायां लक्ष्मीं शरीरशोभायां वा प्रथिततमायाः प्रसिद्धतमायाः असुसमायाः प्राणसमायाः दमयन्त्याः मायां व्याजं स्वयम्बर ऋतुपर्णाह्वानस्यागमनप्रयोजिकां स्मरन् विचारयन्। अनुत्तमायामायाम्

अनुत्तमः श्रेष्ठ आयामो दैर्घ्यं यस्यास्तादृश्यां चारुतमायाम् अतिशयरुचिरायां वसतौ गृहे वासम् आयात् प्राप। नलो भीमोद्दिष्टर्त्तुपर्णनिवासं दमयन्त्या व्याजं स्मरन् उत्तमां वसतिं गतवानिति भावः। प्रतीते प्रथितख्यातवित्तविज्ञातविश्रुताः। वसती रात्रिवेश्मनोः। सुन्दरं रुचिरञ्चारु सुषमं साधु शोभनम्। दैर्घ्यमायामः आयादिति याते लेङि। यद्वा नलः चारुतमाया अत्यन्तसुन्दर्य्याः दमयन्त्याः वसतौ गृहे वासं मा आयात् न प्राप किन्तु रथोपरि तस्थौ। अतेयं पुराणवार्त्ता। नलस्तावद्भीमगृहं न ययौ किन्तु रथोपरि तस्थौ। तच्छ्रुत्वा दमयन्ती प्रासादमारुह्य नलं समीक्ष्य अतिहृष्टा बभूव इति तदेवाह॥ २९॥

तं स्वनयानन्तरसान्निध्यगतमवेच्यनु न्नयान न्तरसा। अभ्युदयानन्तरसावधितमुदा नैषधप्रियानन्तरसा॥

तं स्वनयानन्तरसान्निध्यगतं अवेक्ष्य नुन्नयानं तरसा।

अभ्युदयान् अन्तर् असौ अधित मुदा नैषधप्रिया अनन्तरसा॥३०॥

तमिति। स्वनयानन्तरसान्निध्यगतं स्वस्यात्मनो नयो नीतिः स्वयम्बरघोषणस्य ऋतुपर्णश्रावणं तदनन्तरं तदुत्तरकालाविलम्बेन सान्निध्यं समीपं गतं प्राप्तं तरसा वेगेन नुन्नयानं प्रेरितहयं तं नलम् अवेक्ष्य ज्ञात्वा अनन्तरसा अनन्तो बहुलो रसः शृङ्गारः सम्भोगानुरागो यस्यास्ता-

इत्यसौ दमयन्ती नैषधप्रिया नैषधो नलस्तस्य प्रिया अन्त र्मनसि अभ्युदयान् श्रेयांसि सुखानि वा मुदा हर्षेण अधित ष्टतवती । स्वनीत्युत्तरकालमागतं नलं बुध्वा दमयन्ती बहुलमानन्दम् अवापेति भावः । शृङ्गारादौ विषे वीर्य्ये गुणे रागे द्रवे रसः । अधितेति धाञो लुङि सिचि ॥३०॥

तन्नुन्नालीकेन स्थीयतइत्यत्र सुमुखनालीकेन ।
किंहीनालीकेनस्वकमित्वाछत्तरिपुजनालीकेन ॥

तन्नुन्नाली केन स्थीयते इति अत्र सुमुखनालीकेन ।
किं हीनालीकेन स्वकमित्वा छत्तरिपुजनालीकेन ॥३१॥

तन्नुन्नेति । छत्तरिपुजनालीकेन छत्तानि छिन्नानि रिपुजनानां शत्रुजनानामाली पंक्ति स्तस्याः कानि शिरांसि येन तया सुमुखनालीकेन शोभनसुखपद्मेन हीनालीकेन हीनं त्यक्तम् अलीकं पापं येन तेन तथा स्वकमिता स्वका-मुकेन नलेन किमत्र गृहे ऋतुपर्णावाससौधे केन सुखेन स्थीयत इति हेतो स्तन्नुन्ना दमयन्त्या प्रेरिता साली केशिनी स्ववयस्या वसतिं स्वसखी दमयन्ती तस्या निवास-वेश्मानयतेत्युत्तरश्लोकस्थेन सम्बन्धः । ऋतुपर्णावासगृहे कथं नलस्तिष्ठतीति ज्ञातुं प्रेषिता सखी तं भैमीगृहमनय-दिति भावः । छिन्नं छातं लूनं छत्तं दातं दितं छित इक्-षाम् । आली सखी वयस्या च । कं शिरोम्बुनोः ।

स्त्रीयत इति शुभाख्यागपाजह्यातिसां हलीतीत्वम । नालीकं शरपद्मयोः । अलीकन्त्वप्रिये ऽनृते ॥ ३१ ॥

तं साम्नामा नयतः परीक्ष्य बहुधा गुणाभिरामान यतः । स्वजनगिरा मानयतः स्ववयस्या वसतिमपि परामानयत ॥

तं साम्ना अमा नयतः परीक्ष्य बहुधा गुणाभिरामाः न यतः । स्वजनगिरा मानयतः स्ववयस्या वसतिं अपि परां आनयत ॥३२॥

तमिति । भैमीप्रेरिता केशिनी तं नलं साम्ना ऽमा सान्त्वेन सहितं नयतः नीतितः बहुधा नानाप्रकारेण परीक्ष्य नल एवायमिति ज्ञात्वा स्ववयस्याया भैम्याः वसतिं भवनमपि पराम् उत्कृष्टां स्वजनगिरा दमयन्ती स्वजनानां गिरा वाक्येनानयत आनीतवती । तं कं यतः यस्मात् नलात् मानयतः लक्ष्मीः प्रापयतः अर्जयतः अन्ये केपि गुणाभिरामा गुणरमणीया न भवन्ति ? यद्वा कीदृशो नलः ? मानयतः मानेन यतः नियतः मानीत्यर्थः । पुरुषश्रेष्ठं नलं निश्चित्य भैमीप्रेषिता तद्भवनं निनायेति भावः । बन्धुस्वस्वजनाः समाः । अनयतेति नीञो लङि । अत्र परीक्षायाः पुराणवार्त्ता । भैमी केशिनीमुवाच गच्छ रथान्तिके बाहुकनामा क एष अत्र मम नानाशङ्का भवति । तत्र गत्वा पर्णादवाक्यम् आवय ।

सा गत्वा बाहुकमुवाच त्वां दमयन्ती पृच्छति यूयं किमर्थमागताः । बाहुक उवाच तस्याः स्वयम्बरं श्रुत्वा अयोध्यातो एकाह्नेनागताः । पुनः केशिन्युवाच कस्त्वं ? बाहुक उवाच । असौ वार्ष्णेयनामा नलसूत आसीत् नले राज्याद्भ्रष्टे ऋतुपर्णमाश्रितः अहमप्यस्य सूतः । केशिन्युवाच वार्ष्णेयो नलवृत्तान्तवित् त्वं वा ? बाहुक उवाच नलं न कोपि जानाति । ततः केशिन्या पर्णादानीतश्लोकपञ्चकं श्रावितम् । तच्छ्रुत्वा तूष्णीमास एतत्सर्वं भैम्यै सा कथयामास । भैमी पुनः तामुवाच पुनर्याहि पाकार्थं जलाग्निं विना सामग्रीं देहि । केशिनी तथा कृत्वा नलदत्तश्लोकमेकं गृहीत्वा गता श्लोको यथा ।

मम राज्यं प्रणष्टं यत् तन्नाहं कृतवान् स्वयम् ।
कलिनैतत्कृतम्भीरु यच्च त्वामहमत्यजम् ॥

स कलिरिदानीं मां विमुच्य गतः । तच्छ्रुत्वा भैमी सन्दिग्धा उवाच । पुन र्गत्वा तच्चेष्टामनुभव । सा तथा कृत्वागत्योवाच । ईदृक् पुरुषो न क्वापि दृष्टो न श्रुतः यत् स्पर्शे स्वल्पं द्रव्यं प्रचुरं भवति कदापि शिरो न नमति । दुष्करमप्यस्य सुकरं भवति । अपरञ्च तव पित्रा मांसं प्रेरितं तस्य प्रक्षालनार्थं शून्यकुम्भः प्रेरितः स कुम्भस्तत्स्पर्शात् वारिपूर्णो बभूव तेन गृहीते तृणे अग्निः जज्वाल । अग्निः स्पृष्टो न दहति । तत्कर-

मर्द्दितमपि पुष्पं न म्लायति । ततः केशिनी इन्द्रसेनं तत्पुत्त्रम् इन्द्रसेनाख्य कन्यां नीत्वा ययौ । बाहुकस्तौ दृष्ट्वा क्रोडे कृत्वा रुरोद चणात् तौ त्यक्त्वा ममापि सुतावीदृशौ इति जुगोप सः । बाहुकेन पक्वं व्यञ्जनं केशिनी द्वारा आनीयास्वाद्य नलोयमिति निश्चयम् अकरोत् । ततः केशिनीं पुनः प्रस्थाप्य नानास्तुतिं कारयित्वा गृहमानयामासेति ॥३२॥

तरसैवासावासस्वांविकृतिमहेर्वहन् सुवासावासः ।
स्थिरभावासावासस्निग्ध श्चारंस्तनृपतिवासावासः ॥

तरसा एव असौ आस स्वां विकृतिं अहेः वहन् सुवासाः वासः ।
स्थिरभावा असौ आस स्निग्धः च अरंस्त नृपतिवासावासः ॥३३॥

तरसैवेति । सुवासाः शोभनं वासो वस्त्रं यस्य तादृगसौ नलः अहेः कर्कोटकस्य वासो वस्त्रं वहन् परिदधत् स्वां विकृतिं विकारं कुब्जत्ववैरूप्यादिलक्षणं तरसैव झटित्येव आस जहौ । सा दमयन्ती वा स्थिरभावा निश्चलस्वाभिप्राया आस शुशुभे । नृपतिवासे भीमगृहे आवासो निवासो यस्य तादृक् भीमभूपसौधगतः स्निग्धः स्नेहवान् अरंस्त रेमे दमयन्त्या सहेति शेषः । वस्त्रमाच्छादनं वासः । आसेति असुक्षेपणे इत्यस्य लिटि रूपम् । द्वितीयम् असगतिदीप्त्यादानेष्वित्यस्य रूपम् । अरंस्तेति रमेर्लुङि ॥३३॥

नृपधामनिशान्तेनव्यतीत्य भैमीसमागमनिशान्तेन। द्विषतामनिशान्तेन श्वशुरोदृष्टः श्रितोत्तमनिशान्तेन ॥

नृपधामनि शान्तेन व्यतीत्य भैमीसमागमनिशां तेन ।
द्विषतां अनिशान्तेन श्वशुरः दृष्टः श्रितोत्तमनिशान्तेन ॥३४॥

नृपेति । नृपधामनि नृपस्य भीमस्य धामनि गृहे । शान्तेन क्षमायुक्तेन श्रितोत्तमनिशान्तेन श्रितमुत्तमं निशान्तं गृहं येन तादृशेन । द्विषतां शत्रूणाम् अनिशम् अन्तो नाशो यस्मात् तादृशेन तेन नलेन । भैमीसमागमनिशां भैमी दमयन्ती तस्याः समागमो यत्र तां निशां रात्रिं व्यतीत्य व्युत्क्रम्य श्वशुरो भीमो दृष्टः । भीमगृहे दमयन्ती समागमरात्रिं व्यतीत्य प्रातर्भीमम् अद्राक्षीदिति भावः । निशान्तवस्त्यसदनं भवनागारमन्दिरमित्यमरः । धाम रश्मौ गृहे देहे इति हेमचन्द्रः ॥३४॥

धृतजडिमानेहासीदृतुपर्णोऽपिप्रदृश्यमानेहासी । आत्मसमानेहासीदभिपूज्यैनं नलोऽरिमानेहासी ॥

धृतजडिमाना इह आसीत् ऋतुपर्णः अपि प्रदृश्यमाने हासी ।
आत्मसमाने अहासीत् अभिपूज्य एनं नलः अरिमानेहासी ॥३५॥

धृतेति । ना पुरुष ऋतुपर्णो ऽस्मिन् आत्मसमाने नले आत्मसदृशे प्रदृश्यमाने ज्ञायमाने सति इह भीमसदसि धृतजडिमा धृतजडभाव आसीत् । यद्वा धृतजडिमा

न आसीत् अपि तु जडोऽभूदित्यर्थः। काक्वर्थे नञ्। अरिमानेहासी अरीणां शत्रूणां माने हसितुं शीलमस्येति तादृक्। यद्वा अरिमानेहासी षोन्तकर्म्मणि धातोः प्रयोगः अरिमानस्य शत्रुभिमानस्य ईहा चेष्टा तस्या नाशक इत्यर्थः। हासी हासयुतो नल एनमृतुपर्णम् अभिपूज्य धनमानादिना सन्तोष्य अहासीत् व्यसर्ज्जयत्। प्रातः स्वसमाने नले दृश्यमाने ऋतुपर्णो जड इवाऽभूत् हास्ययुक्तस्य नलः ऋतुपर्णं सम्पूज्य व्यसर्ज्जयत्। दृष्यादिभ्य इमनिज्वेतीमनिच्। आसीदित्यस्तेर्लङि। अहासीदिति हाके र्लङि। यद्वा ऋतुपर्णः कथम्भूतः? अहासी हास्यरहितः अथ वा हा इति कृत्वा आसी आसः आक्षेपस्तद्युतः हा त्वयि ममापराधो जात इत्याक्षेपयुक्त इत्यर्थः॥३५॥

सासुसमासामासस्वयमत्र पुरे नलोयमासामास। स्त्रीणामासामासश्रममसुनानायि सुसुखमासामासः॥

सासुसमासामा सः स्वयं अत्र पुरे नलः अयं आसामास।
स्त्रीणां आसां आस श्रमं असुना अनायि सुसुखमासा मासः॥३६॥

सेति। स अयं नलः अत्र पुरे भीमपुरे स्वयम् आसामास तस्थौ स्वयमित्यत्र स्वैरमिति पाठे स्वैरं स्वच्छन्दम् आसामासेत्यर्थः। कथम्भूतः? सासुसमासामा असुना प्राणेन समा असुसमा दमयन्ती तस्याः सामसान्त्वनेन

सहितो दमयन्तीकृतसान्त्वः । आसां स्त्रीणां स्वावरोधवधूनां श्रमम् आस चिक्षेप चिरविरहजं दुःखम् अपनुनोद । कीदृशेन ? मुखतुलितमासा मुखेन तुलितः समीकृतो मासश्चन्द्रो येन तादृशेन । अमुना नलेन मासोऽनायि निन्ये । स नलो विरहपीडितस्य स्त्रीगणस्य क्लेशमपाहार्षीत् । एवं मासो व्युत्क्रामेति भावः । मास्तु मासे निशाकरे इति हेमः । आसेति असुक्षेपण इत्यस्य लिटि । आगादितीणो लुङि । अत्रेयं पुराणवार्त्ता । स ऋतुपर्णस्तच्छ्रुत्वा नलं ज्ञात्वा सापराधः सन् नलमुवाच मत्कृतमपराधं क्षमस्व दिष्ट्या भार्य्यया सङ्गतोसि । नल उवाच नापराधस्ते कलिकृतमेवैतत् । अक्षहृदयविद्यां गृहाण स ततस्तां गृहीत्वा अन्येन सारथिना अयोध्यां ययौ । नलस्तत्र मासमेकं स्थित्वा स्वपुरं गत्वा पुष्करमुवाच इति तदेवाह ॥३६॥

अथ महद्दाराजितया स्वपुरञ्चम्वा नलस्तदा
राजितया । सासिगदाराजितया पुष्करमभ्य-
धादुदाराजितया ॥

अथ महत् आर अजितया स्वपुरं चम्वा नलः तदा राजितया ।
सासिगदाराजितया पुष्करं अभ्यधात् उदाराजितया ॥३७॥

अथेति । अथानन्तरं तदा नल आराजितया अरीणां समूह आरं तेन अजितया अपराजितया सासिगदाराजितया असिसहिता गदाः असिगदा स्तासां राजिः

पंङ्क्तिस्तया सहिता तासिगदाराजित्वेन राजितया शोभितया खड्गगदाराजियुक्तत्वेन शोभितया चम्वा सेनया महत् पुरं खनगरम् आर गतवान्। उदाराजितया उदारा महती या आजिः संग्रामस्तस्य भावस्तत्त्वं तेन पुष्करम् अभ्यधात् अभिगतः। स नलस्तदनन्तरं महत्या सेनया पुष्करेण संग्रामं कर्त्तुं जगामेति भावः। आरमिति तस्य समूह इत्यणिमस्येति चेतीलोपे रूपम्। ध्वजिनीवाहिनी(?)... पृतनानीकिनी-चमूः। आरेति ऋगतावित्यस्य लिटि। वीथ्यालिरावलिः पंङ्क्तिः श्रेणी लेखास्तु राजयः। उदारो दातृमहतोः। स्त्रियः संयत्समित्याजिसमिद्युधः ॥३७॥

मयिगहनामायासि त्वया मनोनात्रमानिना मायासि। धनुरवनामायासि द्यूतायालं क्व चेतनामायासि॥

मयि गहना माया आसि त्वया मनः न अत्र मानिनां आयासि। धनुरवे नामाय असि द्यूताय अलं क्व चेतनां आयासि ॥३८॥

मयीति। नलः पुष्करमाह। हे पुष्कर त्वया मयि गहना निबिडा माया व्याजः आसि क्षिप्ता। क्वचित्तु मयि नानामायासि इति पाठस्तत्र नाना विविधा माया आसि क्षिप्तेत्यर्थः। त्वयात्रास्मिन् विषये मानिनां मनो-हृदयमायासि आयासयुक्तं दुःखितं कृतं न अपि तु दुःखी-कृतम्। नञ् काक्वर्थः। धनुरवनामाय धनुरारो-पणाय युद्धाय द्यूताय वा अलमसि समर्थोसि। क्व वा

कस्मिन् विषये चेतनां बुद्धिमायासि आगच्छसि वनु रारोपणं वा द्यूतं वा त्वमेकं कुरु येन ते मनोऽभिलाषः तत् वद इत्यर्थः । असुत्क्षेपणे इत्यस्य चिणि लुङि आसीति । असूपतापे ऽस्यायासीति । अस्तेरसीति । यातेरायासीति । अलम्भूवणपर्याप्तिशक्तिवारणवाचकम् । द्यूतोऽस्त्रियामक्षवती कैतवं पण इत्यपि । यद्वा हे नानामाय त्वया मानिना मनः मम चित्तम् आसि चिप्तं मायया मम मनो भ्रामितमित्यर्थः । अतो मायासि मा पलायस्व आहूतो न निवर्त्तेत द्यूतादपि रणादपीति स्मृतेरिति भावः ॥ ३८ ॥

इत्युक्तोदेवनतः सोऽर्थ्यभवत्पुष्करः प्रमादेवनतः ।
येनसबिभिदेवनतः पुरावने ग्रममपि प्रपेदे वनतः ॥

इति उक्तः देवनतः सः अर्थी अभवत् पुष्करः प्रमादे अवनतः ।
येन सः बिभिदे अवनतः पुरा अवनेः अमं अपि प्रपेदे वनतः ॥३९॥

इतीति । इत्यनेन प्रकारेण नलेनोक्ते गदिते प्रमादे अनवधानतायां ऽवनतः आनतः । यद्वा अवनतः रतः सर्वं द्यूतेनैव भविष्यतीति मन्यमानः स पुष्करः देवनतो द्यूतेन पञ्चम्यास्तसिल् अर्थी प्रयोजनवान् धनेच्छुर्वा ऽभवत् । येन पुष्करेण स नलः पुरा पूर्वमवने भूमेरवनतो रक्षणात् बिभिदे भिन्नः कृतः । वनतो ऽरण्यात् अममपि प्रपेदे प्राप्तवान् । स पुष्करो द्यूतार्थ्यैवाभत् । येन पुष्करेण नलो भूरक्षणात् पृथक्कृतो ऽरण्ये दुःखञ्च लब्ध-

वान्। देवनाः प्राशकाश्च ते। प्रमादो ऽनवधानता। अवाग्रे ऽवनतानतम्। पदगताविल्यस्य लिटि प्रपेदे इति ॥३९॥

सचराजायततेनद्यूतेऽसुपणेजितोव्यजायततेन।
निर्व्याजायततेनत्यक्तश्चागस्सुगतरजायततेन॥

स च राजा अयततेन द्यूते असुपणे जितः व्यजायत तेन।
निर्व्याजायत त्यक्तः च आगस्सु गतरजाः यतते न ॥४०॥

सचेति। स च पुष्करो निर्व्याजायततेन निर्व्याजो निष्कपटः आयो धनागमस्तेन ततेन व्याप्तेन निर्व्याजधनागमव्याप्तेन अयततेन शुभावहविधिव्याप्तेन तेन राज्ञा नलेन असुपणे असवः प्राणा एव पणो ग्लहो यस्मिन् तादृशे द्यूते जितः पराजितो व्यजायत अजनिष्ट। त्यक्तश्चोत्सृष्टश्च। कुत इत्यत आह गतरजाः गतं रजोगुणो मत्सरो यस्य तादृक् पुरुषः। आगस्सु अपराधेषु पापेषु वा न यतते न यत्नं करोति। प्राणपणे द्यूते नलेन पुष्करः पराजितः उज्झितश्चेति भावः। पणोऽक्षेषु ग्लहः। जनीप्रादुर्भावेज्ञाजनोर्जेति जादेशः अजायेतेति। रजोगुणेस्त्रीपुष्पेपि। पापापराधयो रागः। यती प्रयत्ने लटि यतते इति। अत्रेयं पुराणवार्त्ता। नलो गत्वा पुष्करमुवाच राज्यं त्यज नोचेद्युद्धं द्यूतं वा कुरु। इत्युक्तः द्यूतमकरोत् तेन पराजितः प्राणात्यये पादानतः प्राणप्रार्थको ऽभवत् ततो निष्कपटं ज्ञात्वा तेन सह सौहार्द्दमकरोदिति ॥४१॥

अयि भवने त्वायस्व स्वभुवं पुष्कर मुदञ्जनेत्रायस्व ।
युगबलनेत्राय स्वस्नेहाय पुरेव विमलनेत्राय स्वः ॥

अयि भवने त्वायस्व स्वभुवं पुष्कर मुदं जने अत्र अयस्व ।
युगबलनेत्वाय स्वस्नेहाय पुरा इव विमलनेत्वाय स्वः ॥४१॥

अयीति । नलः पुष्करमाह । अयि कोमलामन्त्रणे हे पुष्कर भवने गृहे निवसन् स्वभुवं स्वभूमिमस्मद् दत्तां त्वायस्व रक्षस्व । अत्र जने जनपदलोके मुदं हर्षम् अयस्व प्राप्नुहि । युगबलनेत्वाय युगस्य युग्मस्य बलं सामर्थ्यं नेत्वं नायकं यस्य तादृशाय विमलनेत्वाय निर्म्मललोचनाय स्वस्नेहाय स्वप्रेम्णे पुरेव पूर्वमिव स्वः भवावः । हे पुष्कर त्वं स्वभूमिं रक्ष लोके स्निग्धो भव मम तव च स्नेहः पुरेव वर्द्धतामित्याहेति भावः । त्रैङ्पालन इत्यस्य लोटि त्वायस्व । अयस्वेति अयगताविव्यस्य । स्वः अस्ते-र्लटि । यद्वा युगबलनेत्वा आवयोः सेनापतिभ्यां सह स्वभवने अयस्व गच्छस्व आवां पुरेव स्नेहाय स्वः भवावः कथम्भूताय ? विमलनेत्वाय विमलानि नेत्वाणि यस्मिन् तस्मै अन्यत्पूर्ववदित्यर्थः ॥४१॥

हरिपवनयमानस्य स्वबलादिति तुलयतोनु
नयमानस्य । स्नेहानयमानस्य प्रणतिमधात् पुष्करः
सुनयमानस्य ।

हरिपवनयमान् अस्य स्वबलात् इति तुलयतः अनुनयमानस्य ।
स्नेहान् अयमानस्य प्रणतिं अधात् पुष्करः सुनयमानस्य ॥४२॥

हरीति । हरिपवनयमान् हरिरिन्द्रः पवनो वायुः यमो धर्म्मराट् तान् स्वबलात् स्वसामर्थ्यात् तुलयतः समीकुर्व्वतः अनुनयमानस्यानुमानयतः । स्नेहान् प्रीतीः अयमानस्य गच्छतः । सुनयमानस्य शोभननीत्यभिमानस्यास्य नलस्य पुष्करः प्रणतिं प्रह्वत्वं नमस्कारं वा इत्यनेन प्रकारेण अधात् अकार्षीत् । एवं बहुधास्नेहं दर्शयतोऽतिवत्सलस्य पुष्करः प्रह्वोऽभवदिति भावः । अधादिति दधाते र्लुङि ॥ ४२ ॥

अरिसेनानाशस्याश्रितवत्सल तेऽस्तु चेतना नाशस्या । पूरितनानाशस्यास्तोकयशोभिः कदापि नानाशः स्याः ॥

अरिसेनानाशस्य आश्रितवत्सल ते अस्तु चेतना न अशस्या ।
पूरितनानाशस्य अस्तोकयशोभिः कदापि न अनाशः स्याः ॥४३॥

अरीति । पुष्करो नलमाह । हे आश्रितवत्सल आश्रितेषु वत्सल कारुणिक । अस्तोकयशोभिः अनल्पयशोभिः पूरितनानाशस्य पूरिता नाना आशादिशो येन तादृशस्य अरिसेनानाशस्य अरिसेनायाः नाशोऽवसानं यस्मात् तादृशस्य शत्रुबलातङ्कस्य ते तव अशस्या नशस्या प्रशस्या स्तोतुम् अयोग्या चेतना बुद्धि र्न अस्तु न भवतु । कदापि कस्मिन्नपि काले अनाशः आशारहितो न स्याः न

भवः । हे आश्रित कृपापात्र तवास्त्वाधी माभूत् । कदापि आशाव्याघातस्तव मा स्यादित्यर्थः । आशा तृष्णापि याचना । स्तोकाल्पक्षुल्लकाः । अस्तु अस्तेर्लोटि । स्निग्धस्तु वत्सलः ॥४३॥

इति स ननाम नलस्य प्रणतोंघ्री फुल्लवक्त्रनामनलस्य ।
अहितानामनलस्य प्रययौ सार्द्धं तेन नामनलस्य ॥

इति सः ननाम नलस्य प्रणतः अंघ्री फुल्लवक्त्रनामनलस्य ।
अहितानां अनलस्य प्रययौ सार्द्धं तेन नामनलस्य ॥४४॥

इतीति । इत्यनेन प्रकारेण प्रणेता नम्रः स पुष्करः नलस्यांघ्री चरणौ ननाम प्रणतवान् । नाम सम्भावनायाम् । कीदृशस्य नलस्य ? फुल्लवक्त्रनामनलस्य फुल्लं विकसितं हर्षस्मेरं वक्त्रनाम वक्त्रनामकं रूपं वा नलं कमलं यस्य विकसितमुखपद्मस्य । कीदृशस्य ? नामनलस्य नमनं नामस्तस्मिन् नलस्य तृणस्य नतौ तृणप्रायस्य । यद्वा नामनं नमस्कारं लाति स्वीकरोति नामनलः तस्य ला आदाने डप्रत्ययरूपमित्यर्थः एवमहितानाम् अनलस्य शत्रूणामग्नेः । तेन नलेन सार्द्धं सह प्रययौ गतवान् नलानुवर्त्ती बभूव एवं विकसितवदनकमलस्य चरणौ ननाम नलेन सह गतवांश्चेति भावः । नलं पद्मं नलस्तृणे । नामप्रकाशसम्भाव्यक्रोधोपगमकुत्सने । ननामेति नमे लिटि । क्वचित्तु प्रणत इत्यत्र प्रीत इति पाठस्तत्र सन्तुष्ट इत्यर्थः । प्रययौ सार्द्धं बलेन नामनलस्य इति पाठे नलस्य बलेन सैन्येन सार्द्धं समं प्रययौ इत्यर्थः ॥४४॥

मुदममुनामुक्तेन प्राप्य सुराज्यं महात्मना-
मुक्तेन। धृतनानामुक्तेन राज्यञ्चिरम्प्राशासि
विघट्टनामुक्तेन ॥

मुदं अमुना आमुक्तेन प्राप्य सुराज्यं महात्मनां उक्तेन।
धृतनानामुक्तेन राज्यं चिरं प्राशासि विघट्टनामुक्तेन ॥४५॥

मुदिति। आमुक्तेन बद्धकवचेन त्यक्तेन वा अमुना पुष्करेण सह मुदं प्राप लेभे। महात्मनां महाशयाना-मुक्तेन वचनेन विघट्टनामुक्तेन विघट्टनावियोगः तेन मुक्तेन त्यक्तेन वियोगहीनेन। धृतनानामुक्तेन धृताः नानामुक्ताः मौक्तिकं येन तादृशेन नलेन राज्यं राष्ट्रं प्राशासि प्रकर्षेण शिष्टं रक्षितम्। तदनन्तरं स कवचेन पुष्करेण सह हर्षं लेभे महात्मनां वाक्येन निजराज्यं वियोगहीनेनानुशिष्टं नलेनेति भावः। मुत्प्रीतिः। आमुक्तः प्रतिमुक्तश्च पिन-द्धश्चापिनद्धवत्। शासु अनुशिष्टावित्यस्य चिणिलुङि प्राशासीति। उक्तं भाषितमुदितम् ॥४५॥

अरिसंहतिरस्य वनेषु शुचाम्पदमापदमापद माप-
दमा। सुखदञ्च यथैव जनाय हरिं यत मायत-
मायतमायतमा ॥

अरिसंहतिः अस्य वनेषु शुचां पदं आपदं आपत् अमा अपदमा।
सुखदं च यथा एव जनाय हरिं यतमायतमाय तं आयत मा ॥४६॥

अरीति । अस्य नलस्यारिसंहतिः शत्रुपंक्तिः शत्रुसमूहो वनेषु अरण्येषु शुचां शोकानां पदं स्थानम् आपदं विपत्तिम् आपत् लेभे । कीदृशी ? अमा निःश्रीका । एवमपदमा अपदा स्थानरहिता मा लक्ष्मी र्यस्याः सा अस्थिरलक्ष्मीका इत्यर्थः । यद्वा अपगतो दमो यस्याः सा इत्यर्थः । यतमायतमाय यता गता माया कापट्यं यस्य स यतमायः अतिशयेन यतमायः यतमायतमः तस्मै जनाय सुखदं तं नलं मा राज्यलक्ष्मीरायत आगता । यथैव तादृशाय जनाय सुखदं हरिं कृष्णं मायाति तथेत्यर्थः । यद्वा यतमिति भिन्नं पदं यतं नियतचित्तं तम् । आयतमाय श्रेष्ठलाभाय आयत । यद्वा आयतमाय अतिशयधनागमाय यतन्तम् आयतेत्यर्थः । नलस्य शत्रु र्वने वसन् दुःखितो बभूव । निर्व्याजलोकसुखदं तं नलं लक्ष्मीरागतवतीति भावः । आयतेत्ययगतावित्यस्य लङि । इन्दिरा लोकमाता मा । पदं व्यवसितित्राणस्थानलक्ष्मांघ्रिवस्तुषु । विपत्त्यां विपदापदौ । यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु । शुकाहिपिकभेकेषु हरिर्नाकपिलेत्रिषु ॥४६॥

नलेन पुर्य्यता यता यता यता पुरेवसा ।
सदायसुन्मदा मदा मदा मदा स्तसम्पदं ॥

नलेन पुरी अतायत अयतायता पुरा इव सा ।
सदा अयं उन्मदाः मदामदाः अदास्त सम्पदं ॥४७॥

नलेनेति। अथाशीर्वादव्याजेन नलोदयकाव्यसमाप्तिं सूचयति। नलेन नैषधेन सा पुरी स्वीया नगरी पुरेव पूर्वमिव अतायत विस्तारिता। कीदृशी पुरी? अयतायता अयः शुभदैवम्। नलस्येति शेषः। तस्य भावो ऽयता तया आयता विशाला। यदा राज्ञो नलस्य शुभदैवमभूत् तदा यथा पूर्वं स्वनगरी विशालाभूदिति भावः। यद्वा कीदृशेन नलेन? अयतायता अयेन शुभदैवेन तायति पालयति देवब्राह्मणादीनिति शेषः अयतायन् तेन। यद्वा अयं तायति विस्तारयति तेन सर्वदा स्वशुभशंसकेन तायृसन्तानपालनयोरित्यस्मात् कर्त्तरि शट। यद्वा अयो विद्यते यस्यासौ अयः अर्शआदिभ्यो-जित्यच्। तस्य भावो ऽयता शुभदैववत्त्वं तामेति प्राप्नोतीत्ययतायन् तेन। इण्गतौ कर्त्तरि शतरीणोयणितियण्। अयं नलः उन्महा उन्नततेजाः सदा सर्वकालं सम्पदं लक्ष्मीम् अहास्त प्राप। कीदृशीं सम्पदम्? महामहां महान्तो महा उत्सवाः यस्यां सा ताम्। सदैवोत्सवपरिपूर्णां सम्पदं लेभे इति भावः। अतायतेति तनुविस्तार इत्यस्माद् धातोः कर्म्मणि लङि। आत्मने पदे ते परे यकिच कृते तनोतेर्यकीति विकल्पेनात्वे च रूपम्। अहास्तेति ओहाङ्गतौ इत्यस्माद् ये गत्यर्थास्ते प्राप्त्यर्थाज्ञानार्थाश्चेति वचनेन प्राप्त्यर्थाल्लुङि। आत्मने पदे ते परे सिचि कृते रूपम्। पूर्य्यतेति दीर्घपाठे पूः पुरी यता प्राप्ता। कथम्भूता?

आयता विशालेत्यर्थः । पूः स्त्री पुरीनगर्य्यौ वा इत्य-मरः ॥ ४३ ॥

इति सुबोधिनीटीकासहिते श्रीकालिदासकृते

नलोदये सत्काव्ये चतुर्थोच्छ्वासः ।

---

मिश्रानन्दकरस्त्वासीत् महोपाध्यायलक्षितः ।
पुण्यग्रामसभाजेता यष्टा वाणीमयः सुधीः ॥१॥
वेदेनैव विधिं कविं नयकृतै स्तर्केण वाचस्पतिम्
वेदान्तेन शिवं मनुं स्मृतिमयै र्ज्योतिश्चयै र्भास्करम् ।
व्याकृत्येन फणाधरं क्षितिधरं नागाधिपं छन्दसा
धर्म्मो यस्य विजेतुमञ्चति परं सांख्येन चार्वाकपम् ॥२॥
तत्सूनुः सुकृती क्षितीश्वरकृपापात्रः सुहृत्पालको-
नानाशास्त्ररतो महापदयुतोपाध्यायसंज्ञान्वितः ।
सत्तर्कायतकाननोद्यतबलद्वादीन्द्रदन्तावल-
श्रेणीमर्द्दनचातुरीचणहरि र्विद्याकरो मैथिलः ॥३॥
तस्यात्मजोऽभूद्विबुधाग्रगन्ता प्रज्ञाकरः सज्जनतापहन्ता ।
गुणालयः श्रीशपदानुमन्ता शास्त्रेषु दक्षः कुधियां नियन्ता॥४॥
स्वल्पेन वयसा तेन कृता टीका सुबोधिनी ।
पूर्वाचार्य्यकृती र्वीक्ष्य सुधियाम्प्रसृतां मुदे ॥५॥

---